# वैष्णवग्रन्थानां सूचिरारभ्यते ।

# VAISNAVA LITERATURES.

---

**No 1. अष्टादशाक्षरमन्त्रः ।** Aṣṭadaśākṣaramantraḥ Substance foolscap paper, 15 × 4 inches Folia, 2 Lines, 8 10 in a page Character Bengali Date, ? Appearance, nearly fresh Verse Generally correct. Incomplete

A collection of mysterious words used in the worship of Kṛṣṇa, Radha and other Gopis.

**Beginning.** श्रीराधाकृष्णाभ्यां नमः ।

क्लीं कृष्णाय गोविन्दाय गोपीजनवल्लभाय स्वाहा । इत्यष्टादशाक्षर
सम्मोहनाख्यमन्त्र । श्रीं राधायै नम इति ।

अथ कामगायत्री ।

क्लीं कामदेवाय विद्महे पुष्पवाणाय धीमहि । तन्नोऽनङ्ग प्रचोदयात् ॥

**End.** नास्ति ।

**Colophon.** नास्ति ।

विवरणम् – श्रीगुणकर्णाख्य श्रीकृष्णराधाराधनमूलमन्त्रा समुद्दीता सन्ति ।

---

Under this number we find other two small works, the one Bhaktyaṅganirupaṇam, the other Yamunaṣṭakam.

(a) **भक्त्यङ्गनिरूपणम् ।** Bhaktyangnirupaṇam Substance, foolscap paper, 15 × 4 inches Folia, 4* Lines, 6 in a page Character, Bengali Date, ? Appearance, nearly fresh Verse Generally correct Complete (?)

A little treatise on the divisions of Bhakti or the extreme love for Śrikṛṣṇa compiled from several Purāṇas, Smṛtis, etc Anonymous

**Beginning.** श्रीराधाकृष्णाभ्यां नमः । श्रीभक्तिरसामृतसिन्धौ यथा—

गुरुपादाश्रयस्तस्मात् कृष्णदीक्षादिशिक्षणम् ।
विस्रम्भेण गुरोः सेवा साधुवर्त्मानुवर्त्तनम् ॥
सद्धर्म्मपृच्छा भोगादित्यागः कृष्णस्य हेतवे ।
निवासो द्वारकादौ च गङ्गादेरपि सन्निधौ ॥
व्यवहारेषु सर्व्वेषु यावदर्थानुवर्त्तिता ।
हरिवासरसम्मानो धात्र्यश्वत्थादिगौरवम् ॥

**End.** तत्र नामसङ्कीर्त्तनं यथा विष्णुधर्म्मे—

कृष्णेति मङ्गलं नाम यस्य वाचि प्रवर्त्तते ।
भस्मीभवन्ति राजेन्द्र महापातककोटयः ॥

**Colophon** नास्ति ।

विवरणम्—भक्त्यङ्गनिरूपणं नाम श्रीकृष्णभक्तिविषयकं कविनिबन्धः ।

---

(*b*) यमुनाष्टकम् । Yamunāṣṭakam Substance, foolscap paper, 15×4 inches. *Folia, 1 Lines, 6–7 in a page* *Character* Bengali Date, ? Appearance, nearly fresh Verse Correct. Complete

A little work consisting of eight stanzas on the praise of Yamuna, by Rūpa Gosvamin We quote below the whole work.

**Beginning.** श्री यमुनायै नमः ।

भ्रातुरन्तकस्य पत्तने विपत्तिहारिणी
प्रेक्षयातिपापिनोऽपि तापसिन्धुतारिणी ।
नीरमाधुरीभिरप्यशेषचित्तवर्द्धिनी
मां पुनातु सर्व्वदारविन्दबन्धुनन्दिनी ॥ १ ॥
हारिवारिधारयाभिमण्डितोरुखाण्डवा
पुण्डरीकमण्डलोद्यदण्डजालिताण्डवा ।
स्नानकामपामरोग्रपापसम्पदिन्धिनी
मां पुनातु इत्यादि ॥ २ ॥
शीकराभिमृष्टजन्तुदुर्व्विपाकमर्द्दिनी
नन्दनन्दनान्तरङ्गभक्तिपूरवर्द्धिनी ।
तीरसङ्गमाभिलाषिमङ्गलानुबन्धिनी
मां पुनातु इत्यादि ॥ ३ ॥

दीपचक्रवालजुष्टसप्तसिन्धुभेदिनी
श्रीमुकुन्दकल्पितोरुदिव्यकेलिवेदिनी।
कान्तिकन्दलीभिरिन्द्रनीलवृन्दनिन्दिनी
मां पुनातु इत्यादि ॥४॥

माथुरेण मण्डलेन चारुणाभिमण्डिता
प्रेमनद्धवैष्णवाध्ववर्द्धनाय पण्डिता।
ऊर्म्मिदोर्विलासपद्मनाभपादवन्दिनी
मां पुनातु इत्यादि ॥५॥

रम्यतीररम्भमाणगोकदम्बभूषिता
दिव्यगन्धभाक्कदम्बपुष्पराजिरूषिता।
नन्दसूनुभक्तसङ्घसङ्गमाभिनन्दिनी
मां पुनातु इत्यादि ॥६॥

फुल्लपक्षमल्लिकाक्षहंसलक्षकूजिता।
भक्तिविद्धदेवसिद्धकिन्नरादिपूजिता।
तीरगन्धवाहगन्धजन्मबन्धरन्धिनी
मां पुनातु इत्यादि ॥७॥

चिद्विलासवारिपूर भूर्भुवस्स्वरापिनी
कीर्त्तितापि दुर्म्मदोरुपापमर्म्मतापिनी।
बल्लवेन्द्रनन्दनाङ्गरागभङ्गगन्धिनी
मां पुनातु इत्यादि ॥८॥

तुष्टबुद्धिरष्टकेन निर्म्मलोर्म्मिचेष्टिता
त्वामनेन भानुपुत्रि सर्व्वदेववेष्टिताम्।
यः स्तवीति वर्द्धयस्व पुण्डरीकलोचने
भक्तिपूरमस्य देवि सर्व्वतापमोचने ॥९॥

**Colophon** इति श्रीमद्रूपगोस्वामिना विरचितं श्रीयमुनाष्टकं संपूर्णं । ओँ तत् सत्।

विवरणम्—श्रीमद्रूपगोस्वामिविरचितं यमुनाष्टकस्य वर्णनं।

---

No 2 आनन्दवृन्दावनम्। Ânandavṛindavanam Substance, white Kâśmîrî paper, 16 × 6 inches Folia, 91 Lines, 8-15 in a page Character, Bengali Date, .1 Appearance, not old Verse and prose Not Correct Incomplete

This is a Campukāvya on Kṛiṣṇa's character commencing from his earliest age up to the Rasalila at Vṛindāvana, complete in 22 stavakas or chapters, by Kavikarnapūra under the request of Rūpa. A *description of the Vṛindavana is made in the first chapter*, then six chapters are devoted to Kriṣṇa's character in earliest age, the *next fifteen chapters give a complete description of Kṛiṣṇa's characters* at the commencement of his youth. The codex under notice contains the text with a commentary, entitled Sukhavartini up to the end of saptama stavaka.

Beginning *of the Commentary* श्रीश्रीगुरवे नमः ।

यत्प्रासाद सुष्ठ स्वथा रसमया प्राप्य सत्काव्यतां
दीयं सज्जनजनेषु भाविषु सुरेर्दुष्प्रापमेतत् स्वया ।
इत्याज्ञापयतेव येन निदधे श्रीकर्णपूराननै
वाग्मी स्वाप्रिदलामतं गतिरसौ चैतन्यचन्द्रोऽस्तु नः ।
नितान्त नैसर्गिककथमार
लीलाख्यमुख्ये पदमात्मशीर्न ।
श्रीरूपसम्यग्जनकृपमिव
पूर्णं चिरं संचयने सुमेधा ।
नन्दोत्सवादिरासान्ता लीलादीलादिकाधिकाम् ।
श्रीकृष्णलीला श्रयत्न कर्णपूरोमहाकवि ।
एकैव नवकैशोर वृन्दारण्य तदास्पदम् ।
वाल्यलीला तत्र षड्भि प्रादुर्भावमथो हरे ।
ततस्तु पञ्चदशभिर्लीला कैशोरवर्णनाम् ।
एवं द्वाविंशता चम्पूरियम्या स्तवकै कृता ।

Beginning *of the Text.* श्रीकृष्णाय नमः ।

वन्दे पदारविन्दयुगलं यजिन् कुरङ्गीदृशां
वक्षोजद्वयकोरकं विलसति क्षिप्तोऽङ्गराग स्मर ।
काश्मीरं नखभीचिभिर्विदलित कस्तूरिकानीलिमा
श्रीखण्डं नखचन्द्रकान्तिनिकरैर्निर्व्याजमातन्वते ॥ १ ॥
श्रीचक्रिज्याज्जिदशक्रम मातराणं वराके
श्रीराधाधामलनदृक्पथी कुङ्कुमक्षोदवृन्दे ।
अमन्दानन्दमघमरोदुग्धविमुग्धधार्ये
महानार्ध्यविरचनकर्ण वातु न पुनर्नाे ॥ २ ॥

मर्यादिपर्य्याकुलनं विनापि
प्रह्लादयन्ते सुकवेर्वचांसि ।
विनावगाहादपि हृष्टिमात्रा
न्मत पुनन्त्येव हि पुण्यमद्य ॥ ११ ॥

End *of the Text* समाप्त ।

Colophon *of the Text.* इत्यानन्दवृन्दावने कौमारलीलालताविस्तारे वत्सकवधादुरवध पुलिनभोजनमहाभौज्यनी नाम सप्तमस्तवक ॥ + ॥ + ॥ + ॥ + ॥

End *of the Commentary.* समाप्त ।

Colophon *of the Commentary* इत्यानन्दवृन्दावनटीकायां सुखवर्त्तिन्यां सप्तमस्तवक ॥ + ॥ + ॥ + ॥ + ॥

विवरणम्—पुस्तकेऽस्मिन् कविकर्णपूरविरचितानन्दवृन्दावनाख्यं चम्पूकाव्यं सुखवर्त्तिन्यभिधटीका सहितमसम्पूर्णं वर्त्तते ।

---

**No 3** उज्ज्वलनीलमणि सटीक । Ujjvalanīlamaṇiḥ Saṭīkaḥ Substance, country made white paper, 13 × 6 inches Folia 101 Lines 12–21 in a page Character, Bengali Date, ? Appearance, nearly old Verse and prose. Generally correct Complete

A work treating of Madhura Rasa, or love extensively, entitled Ujjvalanīlamaṇi by Rūpa Gosvāmin The codex contains also a commentary on it Locanarocanī by name

Beginning *of the Commentary.* श्रीश्रीराधाकृष्णौ जयत ।

सनातनसमो यस्य ज्यायान् श्रीमान् सनातन ।
श्रीवल्लभोऽनुज सोऽसौ श्रीरूपो जीवसद्गति ।
श्रीहरिभक्तिरसामृतसिन्धौ याति पुरा दूराधीके ।
उज्ज्वलनीलमणौ मम धीयमरीयमसौ विहृति ।

तथाहि य एव रसामृतसिन्धुप्रकाशक पूर्वं भक्त्यादयपुरुमुख्यतयाख्यं रसं किञ्चिदेव विवृत्य तत्क्रमतामननमाश सम्प्रति विवृत भागवते रसमिति व्यापीन रसस्य प्राप्यप्रापकभावयोरभेदं व्यवदधुज्ज्वलनीलमणिं नाम ग्रन्थं विधाय त रसमतीव विवृण्वन् श्रीमदिष्टदेवतामपि श्रीमद्वर्ण्यं निजगुरुमपि तन्नैव नुवन् प्रार्थयते । नामाकृष्टेति ॥ १ ॥

**Beginning** *of the Text* श्रीश्रीराधाकृष्णाभ्यां नमः ॥

नामाकृष्टरसज्ञः शीलेनोद्दीपयन् सदानन्दम् ।
निजरूपोत्सवदायी सनातनात्मा प्रभुर्जयति ॥ १ ॥
मुख्यरसेषु पुरा यः संक्षेपेणोदितोऽतिरहस्यत्वात् ।
पृथगेव भक्तिरसराट् स विस्तरेणोच्यते मधुरः ॥ २ ॥
वक्ष्यमाणैर्विभावाद्यैः स्वाद्यतां मधुरा रतिः ।
नीता भक्तिरसः प्रोक्तो मधुराख्यो मनीषिभिः ।

**End** *of the Text*

गोकुलानन्दगोविन्द गोष्ठेन्द्रकुलचन्द्रमः ।
प्राणेश सुन्दरीवृन्द नागराज शिखामणे ॥
वृन्दावनविधो गोष्ठयुवराज मनोहर ।
क्षम्यतां व्रजदेवीनां प्रेयसि प्रणयोत्तम ॥ २३ ॥
अनल्पत्वादपारत्वादाप्तोऽसौ दुर्विगाहता ।
स्पृष्टः परं तटस्थेन रसाब्धिर्मधुरो मया ॥ २४ ॥
अयमुज्ज्वलनीलमणिर्गहनमहाघोषसागरप्रभवः ।
भजतु तव मकरपरिसरसेवोचितं देव ॥ ० ॥ ० ॥ ० ॥

**Colophon** *of the Text* श्रीश्रीमदुज्ज्वलनीलमणिनामाऽयम् सम्पूर्णः ॥ ० ॥ ० ॥ ० ॥
श्रीमद्रूपगोस्वामिना विरचितः ॥ इति ॥ ० ॥

**End** *of the Commentary* अयमिति ग्रन्थपक्षे गहनमहाघोषः श्रीमन्नन्दराजव्रजः स एव सागरः तत्र प्रभवः इति तदेकदेशश्रीनन्दगोपगणादुद्भूत इत्यर्थः । यद्वा गहनमहाघोषसागरः श्रीमान् रूपसनातनसिन्धुनामा महान् यस्य तस्मादुद्भूतः । गहनत्वं दुरवगाहनत्वं । तत्र मकरकुण्डलेत्यादिना तु स्वचापलापराधक्षमाप्रार्थना । मणिपक्षस्तु सुगमः । तदेवमस्य ग्रन्थस्य तदेकाराधनार्थता तथापि रहस्यता व्यज्य तादृशतदीयरहस्यरसावसरसंविधानाधिकारिभिस्तद्भक्तस्यैव पर्यालोचनीयतामुपदिदेशेति लभ्यं । ततश्च परमोपदेष्टुः तथामनुमतो न केनचिदप्यवलम्बनीयो । यत्र कथमपि निर्व्यलीकविकारविचारकोऽयं स्वालोकनाय रहसि प्रकटयतु श्रीमदुज्ज्वलनीलमणिप्रदीप + + + दाता स एव इति ननु समर्थनैव इति सखीगणभेदाः ।

सनातनसमो यस्य ज्यायान् श्रीमान् सनातनः ॥
श्रीवल्लभोऽनुजः सोऽयं श्रीरूपो जीवसद्गतिः ॥

**Colophon** *of the Commentary* सम्पूर्णेयं श्रीमदुज्ज्वलनीलमणिनामग्रन्थस्य लोचनरोचनीटीका ।

विवरणम्—पुस्तकेऽस्मिन् लोचनरोचनीनामटीकासहितः उज्ज्वलनीलमणिः सम्पूर्णो वर्तते ।

**No 4** लोचनरोचन्यानन्दचन्द्रिकासहितउज्ज्वलनीलमणि । Locanarocanyānandasahitaujjvalanīlamaṇiḥ Substance, country made white and yellow paper, 15 × 6½ inches Folia 158 Lines, 7–16 in a page Character, bengali Date ? Appearance, partly fresh and partly old Prose and verse Generally correct Complete

*This codex contains the text of the Ujjvalanīlamaṇi with two* commentaries Locanarocanī and Ānandacandrikā As the text with Locanarocanī has been already noticed We notice below the new *commentary Ānandacandrikā only*

**Beginning.** श्रीराधाकृष्णाय नमः

बिभ्रन् दृगम्बुजपरागचयोऽञ्जितोऽपि
दृभ्यन् सुखान्मिलनरागभरान्वितोऽपि ।
तद्यन्मुहुः क्षितसुधां परिपायितोऽपि
श्रीराधया भवतु समदं हरिर्मे ॥ १ ॥
श्रीमज्जनप्रतिपदं श्रुतयद्वराख
हारावलिर्धनरसध्वनितत्प्रसादा ।
श्रीरूपपादघनदिव्यनदी मदीयं
चेतः प्रविश्य दधतु दययात्मशेषम् ॥ २ ॥
तत्र श्रीजीवगोस्वामिचरणेभ्यो नमो नमः ।
सिन्धुकीटिगभीरार्थां मतं यत्र कृपाश्रितम् ॥ ३ ॥
एका मदीयटीकायां कारिका संश्रयादिमिन् ।
यथैव परमोत्कर्षं दधत स्फुटमीयिता ॥

तथा च

स्वच्छया लिखितं किञ्चित् किञ्चिदत्र परेच्छया
यत् पूर्व्वापरसम्बन्धं तत्पूर्व्वमपरापरम् ॥ इति
परकीयात्मचर्यो यमकाभावस्य सचयः ।
स्वजनार्थ्यपरम्यागो यासवतन समुत ॥
तेनैव कथितो यमस्यादिमध्यावसानत ।
दुर्गम्यत्विंऽप्युज्ज्वलत्वाद्याभिष्यासुरिम मुहुः ।
तदीयचरणाम्भोजरज कारुण्यलवभाक् ।
यदत्र प्रसपाम्यनन् चमत्का मे कृपाम्बुद ॥ ३ ॥

This little work, entitled Kiranalesah contains explanatory notes on the Ujjvalanilamani Anonymous

**Beginning.** श्रीकृष्णचैतन्याय नमः । अथोज्ज्वलरसे । तत्र विषयालम्बननायकचूडामणि श्रीकृष्ण । स प्रथमं श्रीकृष्णमथुराद्वारकासु क्रमेण पूर्णतम पूर्णतर पूर्ण इति त्रिधा । धीरोदात्त धीरललित धीरोद्धत धीरप्रशान्त इति प्रत्येकं चतुर्विध इत्येवं द्वादश ।

**End.** अथ सम्भोगः—संक्षिप्त सङ्कीर्ण सम्पन्न समृद्धिमान् इति चतुर्विधः । पूर्वरागान्ते कुण्ठाधरनखक्षतादीनामन्यत्वे संक्षिप्त मानान्ते वञ्चनात् व्यर्थादिदोषाभावमिश्रित सङ्कीर्णं । किञ्चिद्दूरप्रवासान्ते सम्पन्न स्पष्ट सुदूरप्रवासान्ते समृद्धिमान् चेति स्पष्टम् । अथ सम्भोगप्रपञ्च—दर्शन जल्पनस्पर्शनवर्त्मरोधरासविहारजलकेलिनौखेलचौर्यघट्टलीलादानकेलिकुञ्जा वनलीलामधुपानाद्योऽनन्ता एव ॥ • ॥

**Colophon.** उज्ज्वलनीलमणिकिरणलेशः सम्पूर्णः ॥

अनधीतव्याकरणचरणाबद्धो हरेर्यं स्यात् ।
उज्ज्वलनीलमणीरत्वचित्तमहा तस्य ।

इति उज्ज्वलनीलमणिकिरणलेशः समाप्तः ॥ • ॥

विवरणम्—नियम्य ऽस्मिनुज्ज्वलनीलमणिरतिसंक्षेपेण विवृत इत्यस्य किरणलेशेति नाम कृतम् ।

---

No. 6 उत्कलिकावल्लरी । Utkalikāvallari

Although this codex is labelled as containing one work (*Utkalikā vallari*), yet careful examination reveals three other works in it besides Utkalikāvallari, under the following descriptions.

(*a*) चाटुपुष्पाञ्जलि सटीक । Cāṭupuṣpāñjalih Saṭīkah Substance country made colourless paper 14 x 5 inches Folia 5 Lines, 12-14 in a page Character Bengali Date, ? Appearance nearly old Verse and prose Generally correct. Complete

A little poem of 24 stanzas on the praise of Rādhā, entitled Cāṭupuṣpāñjali with a commentary in the margins Anonymous

**Beginning** *of the Commentary* अथाष्टकेन श्रीराधां स्तौति। दिशि दिशीत्यादिना राधिकामहमर्चयामीत्यन्वय। कीदृशीमित्याह—सञ्चरन्ती या नेत्रयोर्लक्ष्मी शोभा सम्पत् तस्या विलसिता या खुरल्यो विलोचनपटुतास्तथा अभ्यासा ताभि खञ्जरीटस्य खञ्जनस्य खेलां दिशि रचयन्तीं खञ्जरीटस्तु खञ्जन इत्यमरः। यस्या दिशि नेत्रे क्षिपति सा दिक् खञ्जनमयेव लक्षिता भवतीत्यर्थः। हृदयेति हृदयमधुपस्य मल्लीमिव वरिष्ठदयस्य नन्दिनो मित्यर्थः ॥ १ ॥

**Beginning** *of the Text* नम श्रीवृन्दावनेश्वर्यै।

दिशि दिशि रचयन्तीं सञ्चरन्नेत्रलक्ष्मी
विलसितखुरलीभि खञ्जरीटस्य खेलाम्।
हृदयमधुपमल्लीं बल्लवाधीशसूनो
रखिलगुणगभीरां राधिकामर्चयामि ॥ १ ॥

**End** *of the Text.* व्रजराजकुमारवल्लभा-
कुलसीमन्तमणि प्रसीद मे।
परिवारगणस्य ते यथा
पदवी मे न दवीयसी भवेत् ॥ २२ ॥
करुणां मुहुरर्थये परं
तव वृन्दावनचक्रवर्त्तिनि।
अपि केशिरिपोर्यया भवेत्
सचटुप्रार्थनभाजनं जन ॥ २३ ॥
इमं वृन्दावनेश्वर्या जनो य पठति स्तवम्।
चाटुपुष्पाञ्जलि नाम स स्यादस्या कृपास्पदम्॥

**Colophon** *of the Text* इति चाटुपुष्पाञ्जलि।

**End** *of the Commentary.* व्रजेति व्रजराजकुमारस्य यावन्ति वल्लभाकुलानि प्रेयसीवृन्दानि तेषां सीमन्तमणिस्तमपि तत् सम्बोधने तथा अपि स्त्रीपुंसयोरप्यजातौ मुक्तादिकेऽपि चेति मेदिनी। त्वं मे प्रसीद एतावन्तं प्रसादं कुरु। ते तव परिवारगणस्य पदवी पन्था मे मम दवीयसी दूरतरा न स्यात् किन्तु सन्निहिता स्यात् ॥ २२ ॥

हे वृन्दावनचक्रवर्त्तिनि निखिलवृन्दावनराज्याभिषिक्ते राधे तव करुणां, नानाविरागलस्य केशिरिपोरपि सचटुप्रार्थनभाजनं प्रियवचनघटितप्रार्थ

यत्नस्य पात्रमत्र भवो भवेत् ॥ ११ ॥ यत्रा वृन्दावनेश्वरा कृपास्पदं तथा पार्थ ॥ ४ ॥

Colophon *of the Commentary* इति चारुपाठनिष्यन्दम् ।

विवरणम्—श्रीराधास्तोत्रकपाठ्यं निवन्धः ।

---

(*b*) गान्धर्व्विकाष्टकम् सटीकम् । Gāndharvikāṣṭakam Saṭīkam Same substance, 14 x 5 inches Folia, 2 Lines, 32 at all Character Bengali Date, ? Appearance, old Prose and verse Generally correct *Complete*

A poem consisting of 8 stanzas on the praise of Gāndharvā a name of Rādhikā, entitled Gāndharvāṣṭakam with commentary in the margins Anonymous

Beginning *of the Commentary.* अथाष्टकेन गान्धर्व्वां प्रार्थयति वृन्दावनेत्यादिना ॥ हे देवि राधे मयि प्रसीद कृपां विधेहि तावाद युवयोर्वदनारविन्दं सन्दर्शयेति स्वमुखदर्शनमपि त्वदधीनमिति भाव । युवयो कथम्भूतयोरित्याह केलि कुञ्जे वृन्दावने मत्तद्विपप्रवरयोः कौतुकविभ्रमोविनोदविलासवेन विहरता क्रीडतो ॥ १ ॥

Beginning *of the Text* श्रीगान्धर्व्विकायै नम ।

वृन्दावने विहरतोरिह केलिकुञ्जे
मत्तद्विपप्रवरकौतुकविभ्रमेण ।
सन्दर्शयस्व युवयोर्वदनारविन्द
द्वन्द्वं विधेहि मयि देवि कृपा प्रसीद ॥ १ ॥

End *of the Text* वाग्युद्धकेलिकुतुके व्रजराजसूनु
जित्वोन्मदामधिकदर्पविकासिजल्पान् ।
फुल्लाभिरालिभिरनल्पमुदीर्य्यमान
स्तोत्रां कदा नु भवतीमवलोकयिष्ये ॥ ८ ॥
य कोऽपि सुष्ठु वृषभानुकुमारिकाया
समर्थनाष्टकमिदं पठति प्रपन्न ।
सा प्रेयसा सह समेत्य धृतप्रमोदा
तत्र प्रसादलहरीमुररीकरोतीति ॥ ९ ॥

Colophon *of the Text.* इति गान्धर्व्वासंप्रार्थनाष्टकम् ॥ ० ॥

End *of the Commentary* यामिति भवतौ कदा अहं अवलोकयिष्ये इत्यादि। अथ अनातिप्याह वाग्युद्धे केलिकुञ्जे वाक्यौद्धाकफौड़ाविनोदे अधरोष्ठं मजपानकृत् पेह जित्वा उन्मदामतिहष्टो अधिकदर्पविकाशौ कर्णौ यस्या स्तौ। तदा कृष्णामि स्वेश्वरीविजयान् प्रहसद्वदनाभिरालिभिर्दौयमानं कोर्त्तं स्तुतिर्यस्यास्तां ॥ ८ ॥ अष्टकाध्ययनफलमाह—य इति। यो जन मयव सरभागत सन् तवभानुकुमारिकाया इद सम्पार्थनाष्टकं मुहु पठति तस्य सम्बन्धिनौ प्रसादलहरौं सा तनुकुमारिका ध्वरोकरोति स्त्रीकरोति तत प्रसादं तमौतौप्यर्थं। मिथसा कृष्णन सह सङ्गत ॥ ९ ॥

Colophon *of the Commentary* नास्ति।

विवरणम्—गान्धर्व्वाष्टक नाम श्रीराधाकृष्णविषयकोऽयं निबन्ध।

---

(*c*) कार्पण्यपञ्जिकास्तोत्रम् सटीकम्। Kārpaṇyapañjikastotram Saṭīkam Substance, country made white paper, 14 x 5 inches Folia, 5 Lines 11 16 in a page Character, Bengali Date, ? Appearance, not old Prose and verse Generally correct Complete

A hymn to Rādhā and Kṛṣṇa entitled Kārpaṇyapañjikastotram by Rūpagosvāmin, with an anonymous commentary in the margins

Beginning *of the Commentary*

नमोऽस्तु भावभूपाय श्रीरूपाय दयाब्धये।
कार्पण्यपञ्जिकाद् स्वभक्तिका लभ्यते यत ॥

अथ कार्पण्यनिवेदनया स्वामिनौ प्रसादयति तिष्ठन्नित्यादिभि। असौ रूपगो दीनो जनो वृन्दाटवौकुञ्जे तिष्ठन् वृन्दाटवौश्वयो पादपद्मेषु विज्ञप्ति विदधाति कौनाम रूपगो लुब्धो यद्वो दीनोऽभिलाषुक इति अत्रायम्। तत्रामौपालस्य दौनस्य मे विज्ञप्तिरौश्वर्ययो तयोः श्रोतव्येव। स्वधामप्राप्ते कृष्णकृत दौनानां विज्ञप्तिभौश्वरा प्रख्यातौति प्रसिद्धमिति भाव ॥ १ ॥

Beginning *of the Text* श्रीवृन्दावनेश्वरी जयत।

तिष्ठन् वृन्दाटवौकुञ्जे विज्ञप्तिं विदधात्यसौ।
वृन्दाटवौश्वयो पादपद्मेषु रूपगो जन ॥ १ ॥

नवेन्दीवरसन्दोहसौन्दर्य्यास्कन्दनप्रभम् ।
चारुगोरचनागर्व्वगौरवस्वासि सौरभात् ॥ २ ॥
शातकुम्भकदम्बश्रीविडम्बिस्फुरदम्बरम् ।
हरता किमुकस्यायुनयनेन विराजितम् ॥ ३ ॥

End *of the Text*   जाम्बूनदाभताम्बूलीपर्णाभवदनस्य वाम् ।
वदनाम्बुजयोरेष निभालयति जन कदा ॥ ४ ॥
क्वासौ दुष्कृतकर्म्माहं क्व वा निश्यर्थनेदृशी ।
किम्वा कस्मान्नु युवयोरुन्मादयति माधुरी ॥ ४३ ॥
यथा वृन्दावने जन्तुरनर्होऽप्येष वास्यते ।
तथैव कृपया नाथौ सिद्धिं कुरुतमीप्सिताम् ॥ ४४ ॥
कार्पण्यपञ्जिकामेतां सदा वृन्दाटवीतटी ।
गिरैव जन्यतोऽप्यस्य जनौ सिध्यतु वाञ्छितम् ॥ ४५ ॥

Colophon *of the Text*   इति कार्पण्यपञ्जिकास्तोत्रं सम्पूर्णम् ॥ ० ॥

End *of the Commentary*   जाम्बूनदाभानि सुवर्णवर्णानि ताम्बूलीपर्णान्यवदनस्य विशिनष्टि कृत्वा अरुणकादियोजनया विटि विनिर्म्मायेत्यर्थः वां वदनाम्बुजयोरेष जन कदा निभालयति ॥ ४२ ॥ एवमिति दुर्लभान्यभीष्टानि प्रार्थ्य तत्र तेषु स्वयोग्यतामपश्यन्नाह क्वेति असौ दुष्कृतकर्म्माहं क्व ईदृशी एतद्विशेषण विशिष्टा पूर्व्वोक्ताभ्यर्थना क्व । दुर्घटौ द्वौ सम्बन्ध इत्यर्थः । तर्हि कथ मर्थयसे तत्राह किञ्चेति अथवा युवयोर्माधुरी कस्मा जन नोन्मादयति अपि तु सर्व्वमेवेत्यर्थः तत्र न कोऽपि दोष इति भाव ॥ ४३ ॥ यथेति जन्मनाम्नानया कृपया अनर्होऽपि जन्तुर्वृन्दावने वास्यते हे नाथौ तथैव ममेप्सितां सिद्धिं युवां कुरुतम् ॥ ४४ ॥ एतत्स्तोत्रपाठमात्रात् प्रेमसिद्धिर्भवेदित्याह । कार्पण्य दैन्य पंक्यते विस्तार्य्यतेऽनया इतिका पंक्यपञ्जिका पंजिका पदभंजि केति हेम । हे वृन्दाटवीतटी एतां गिरैव पुनर्मन्यता च सदा जन्यतोऽपि किं पुनस्तदर्थं विचारयतो जनौ मा पितरौ वाञ्छितं युवयोः कावश्यं सिध्यतु ॥ ४५ ॥

Colophon *of the Commentary*   इति कार्पण्यपञ्जिकास्तोत्र व्याख्यानम् ।

विवरणम्—पुस्तकेऽस्मिन् सटीक कार्पण्यपञ्जिकास्तोत्र वर्त्तते ।

(*d*) उत्कलिकावल्लरी सटीका । Utkalikavallarī Saṭīkā Substance country made white and colourless papers of different measures Folia 13 Lines, 11-17 in a page. Character, Bengali Date, Śaka 1417* Appearance, not old *Prose and verse Generally correct Complete* .

A poem describing one's serial meditation effected by the sight of the Vṛndāvana entitled Utkalikāvallarī *with an explanatory* commentary in the margins Anonymous

**Beginning** *of the Commentary* उत्कलिकाकुलात्मा उत्कण्ठाव्याप्तचित्त एकोऽसौ अहं वृन्दावनमध्यं प्रपद्य कौतुकैरार्त्तरवं कुर्वन् हृदि मुद्रितस्य स्वकतो बाष्पस्य कठोरां पिण्डीभूतां मुद्रामुद्घाटयामि । १ ॥

**Beginning** *of the Text*

प्रपद्य वृन्दावनमध्यमेक
कौतुकसादुत्कलिकाकुलात्मा ।
उद्घाटयामि ज्वलतः कठोरां
बाष्पस्य मुद्रां हृदि मुद्रितस्य ॥ १ ॥
अये वृन्दारण्य त्वरितमिह ते सेवनपरा
परामापुः के वा न किल परमानन्दपदवीम् ।
अतो नीचैर्याचे स्वयमधिपयोरीक्षणविधे
र्वरेण्यां मे चेतस्युपदिश दिशं हा कुरु कृपाम् ॥ २ ॥

**End** *of the Text* पद्मपालवरेण्यमन्दतो
वरमेतं मुहुरर्थये युवाम् ।
भवतु प्रणयो भवे भवे
भवतोरेव पदाम्बुजेषु मे । ६८ ॥
उद्गीर्णाभूदुत्कलिकावल्लरिरेषे
वृन्दाटव्यां नित्यविलासव्रतयोर्वाम् ।
वाचाचेयं व्याहरतीप्युल्लसर्मतामाकर्ण्यं
मामप्रीकामितसिद्धिं कुरुतम् । ६९ ।
चन्द्राश्वभुवने शाके पौषे गोकुलवासिना ।
इयमुत्कलिका पूर्णा वल्लरी निर्मिता मया ।

* This is of course the date of the original composition, see the final stanza.

**Colophon** *of the Text* उत्कलिकावल्लरी समाप्ता ॥ ० ॥

**End** *of the Commentary* पद्यपालानां वरिष्ठौ तैयौ राजानौ श्रीमद्व्रजभानुनन्दौ तयो-
नन्दिनो च नन्दनश्च यौ तत्सम्बोधने तथा भव भवे जनानि जनानि । ६८ ॥
श्रीरूपपादाम् वाञ्छितलाभं याचन् वदति—हे देवौ वां युवयोरेव उत्कलिका
वल्लरि उत्कण्ठालता उद्ग्रीवीभूत् वदिता जाता मत्क्लिवल्लरी लतति धन
जय । एतां वाचामेव किं पुनर्मनसापि ।

**Colophon** *of the Commentary* नास्ति ।

विवरणम्—पुस्तकेऽस्मिन् उत्कलिकावल्लरीनामश्रीराधाकृष्णभक्तिविषयक कश्चिन् पद्यनिबन्धो वर्त्तते ।

---

No 7. कर्णामृतम् । *Karnamritam* Substance, country made white paper, 15 x 5 inches. Folia, 69 Lines, 4–10 in a page Character, Bengali, Date, ? Appearance, nearly old Verse Not correct Complete

A Bengali poem on Kṛṣṇa's adventures at Vṛndāvana by Śrīlīlāsukha. The language of the work being Bengali, it deserves no further notice

पुस्तकेऽस्मिन् कर्णामृत नाम श्रीलीलासुखविरचित कश्चिन् श्रीकृष्णचरितविषयको वङ्गभाषा पद्यनिबन्धो वर्त्तते ।

---

No. 8. कर्णामृतम् । Karnāmritam Substance, country made white paper, 14 x 5 inches Folia, 46 Lines, 1–12 in a page Character, Bengali Date, ? Appearance, nearly old Verse Generally correct Complete

Another complete copy of the same work

विवरणमुक्तपूर्वम् ।

**No 9 कर्णानन्दम् ।** Karnânandam Substance, country made white paper, 14 × 5 inches Folia, 72 Lines, 11 in a page Character, Bengali Date, *Śaka 1702, Malla Era 1096* Appearance old Verse Not correct Complete

A hymn to Śrikṛṣṇa, entitled Karṇânanda, in Bengali, by Yadunandana Dâsa We do not make any further notice of it for the same reason.

पुस्तकेऽस्मिन् श्रीयदुनन्दनदासविरचित कर्णानन्दं नाम कश्चित् बङ्गभाषापद्यनिबन्धो वर्त्तते ।

---

**No 10. श्रीकृष्णचरितामृतम् ।** Śrîkṛṣṇacaritâmṛitam Substance, country made white paper, 12 × 4 inches. Folia, 63 Lines 4–14 in a page Character, Bengali Date, Śaka 1623 Appearance, very old and writing effaced in parts Verse and prose Not correct Complete

A poem on the adventures of Śrîkṛṣṇa at Vṛindavana, entitled Śrîkṛṣṇacaritâmṛita. The extracts quoted below will show the contents in detail Anonymous The codex contains also a commentary mixed with the text

**Beginning.** श्रीराधाकृष्ण ।

श्रीचैतन्यमुखोद्गीर्णा हरे कृष्णेति वर्णकाः ।
मज्जयन्तो जगत्प्रेम्णि विजयन्तां तदाह्वयाः ॥
आददानस्तृणं दन्तैरिदं याचे पुनः पुनः ।
श्रीमद्रूपपदाम्भोजधूलिः स्यां जन्मजन्मनि ॥
श्रीकृष्णचरणं नौमि शरणं मम सन्ततम् ।
शरणं सर्व्वेषु धामानि शरणं यस्य तान्यपि ॥
श्रीमुकुन्दपदद्वन्द्व कन्दमानन्दसन्तते ॥
तन्नेत्र मयि कारुण्यं स्वभावेऽकृतो अकृतः ॥
स्वमनोवृत्तिमेकाग्र्यभावाभ्यासयते मया ।
श्रीरूपकृतपद्यानां कोऽपि कोऽपि चयः स्फुटम् ।

तथान्निष्पन्नप्रतिज्ञा ।

प्रकाशा अस्य चत्वारो वैलक्षण्यस्थितेरपि ।
भेदा निरसनस्येह साधनस्य तथैकशः ॥
विरोधः खण्डनं चैषां समर्थाया इति क्रमात् ।
प्रकाशन दुरूहस्य निरासो विमतस्य च ।
वैलक्षण्य तयोरैक्यं गतयोर्धार्मिकं मतम् ॥
असत्य विमत ज्ञेयं सदेव मतमुच्यते ।
वैलक्षण्यं पदार्थेऽपि वैशद्याय पृथक्कृतम् ॥
तच्चतुष्टयतो शिष्य साधनानां चतुष्टयम् ।
स्वरूपकृतमर्थाद्यं महाभागवतस्मृतम् ॥

**End.** किञ्च

कामपानं विदग्धस्य सुधया दीदृशं तथा ।
सदो भक्षमीकाम्नो तथा भयपलायनं ।
अन्यथा बहुमूर्तित्वं वनस्थगोपाख्यं तथा ।
असत्यभाषणं चौर्यं परदाराभिमर्शनम् ॥
माधुर्यं तत्र कथ्यायमसाधारणमुच्यते ।
माधुर्यस्य पुरी ग्रामे तत्पश्चात् तत्र सत्पथो ॥
खीभकतो भवेत्तत्र यो रागाध्वप्रवर्तक ॥
माधुर्यगुणवत्तोऽपि तस्यार्थं मर्मरादिकम् ।
माधुर्यमथवा तद्वत् कृष्णादीनां भवेत् सदा ।
सर्वेषां गुणद्रव्याणां (?) माधुर्यमुत्तमो गुणः ।
तारतम्येन तस्यैव द्रव्याणां तत् प्रजायते ।
धात्वर्थादिपरिच्छिन्नं माधुर्यं विमतसम्मतम् ।
विनागुणाभिर्मेश्वर्यं यत्लक्षणस्य प्रकाशते ।
माधुर्याद्विभिन्नत्वात् मधुरैश्वर्यमुच्यते ।
विदग्धानन्दसंश्लिष्टाविदग्धमुखभर्ड भाति ॥
तृष्णा तथापि कोटेऽभिषेश्वर्यं मधुरं स्मृतम् ।
\+ + + + + ।
कथं भक्तिं समुदाये भक्तानां प्रेमकारणम् ।
भक्तवर्धनसमुदाये काटिं + + + लिखति । इति ।

श्रीमद्राधारमणचरितामृतपीयूषधारा
वारंवारं रसिकसदसि प्रेमसत्र. प्रवर्षन् ।
गोराकुण्डे पुनरपि कदा श्री + + +
नैवानन्दं प्रभुरनुपमं हा मदीयं विधाता ॥ ० ॥
श्रीरूपरघुनाथश्रीचरणसरोजेषु ममास्तु रतिः ॥ ० ॥ ० ॥
लिखि श्रीभिखारिदास । शकाब्दा १६२१ ॥ ० ॥ ० ॥ ० ॥ ० ॥ ० ॥ ० ॥

विवरणम्—पुस्तकेऽस्मिन् श्रीकृष्णचरितामृतं नाम कश्चिद्वैष्णवनिबन्धो वर्णित ।

---

**No. 11.** कृष्णभावनामृतम् । Krisnabhavanamritam Substance, untry made white paper, 14 x 5 inches Folia, 118 Lines, 5 14 in a age Character, Bengali Date, Śaka 1601 * Appearance, not old 'erse and prose Generally correct Complete

A poem on devotion to Śrikrisna, entitled Krisnabhāvanāmrita vith an explanatory commentary in margins. Anonymous.

**Beginning** *of the Commentary* श्रीश्रीकृष्णानन्दो जयति ।

वन्दारुवीश्वरसभाजनराजमान
श्रीविश्वनाथगुणनूपककाव्यरत्नम् ।
भक्तिप्रमुष्टमधुरुता तदीया
सौभाग्यभाजमपि श्रीधरमुं विधत्ताम् ।
अथ शास्त्रीयसिद्धान्तसमाविष्टविपश्चिद्वृन्दवृन्दविध सपटीयसी श्रीभगवत्-
प्रतिपत्ति ग्रन्थकारः स्वकीयपरिमार्जनाचरणेन लिखति श्रीकृष्णेति ।

**Beginning** *of the Text* श्रीहरिदासवर्यं शरणम् ।

श्रीकृष्णचैतन्यघनं प्रपद्ये
सम्प्रदायप्रवर्तकं प्रपद्यम् ।
यत्पदेषु कोट्यर्बुदशालिधारा
पराम्पराप्यायितसर्वविश्वम् ॥ १ ॥
सनातनं रूपसुदीयुषी चितौ
[illegible]

---

* This is the date, in which the author finished his work See the end

No 12. कृष्णलीलास्तवम् । Krisnalilastavam Substance, country made white paper, 12 x 5 inches Folia, 18 Lines, 8-12 in a page Character, Bengali Date ? Appearance, not old, but slightly worm-eaten in parts Verse Not correct. Complete

A little work in praise of Krisna's adventures at Vrindavana, entitled Krisnalilastava Anonymous

Beginning. श्रीश्रीकृष्णचैतन्यचन्द्राय नमः ।

श्रीकृष्णस्य कथाधूर्वं यथा भागवतक्रमम् ।
लिख्यतेऽष्टोत्तरशतप्रमाणानन्दसिद्धये ॥ १ ॥
प्रणम्य प्रणमामि त्वामात्मारामाधीश्वरेश्वर ।
मायावतारकृत् कृष्ण मथुरानन्दपूरद ॥ २ ॥

एवमादौ यथावदारम्भे नमस्कार एक ॥

जयकृष्ण परब्रह्मन् जगतस्त्व जगन्मय ।
अद्वैत सच्चिदानन्द स्वप्रकाशाखिलाश्रय ॥ ३ ॥
निर्विकारापरिच्छिन्न निर्विशेष निरञ्जन ।
अच्युत सत्यसन्धान परमज्योतिरक्षर ॥ ४ ॥

End. दातुं भक्तोति मैत्रर्षे प्रेमभरचकीर्तनम् ।
तव प्रेमकटाक्षश्च मयि प्रापयितुं मम ॥ ११८ ॥
गोपीदगोपिकाधर्मं त्वाच दर्शयितुं प्रभु ॥
एवं यो मम हृदिस्थ सञ्चायास्वनं परम् ॥ ११९ ॥
महाकारुण्यमहिमा पुराणो नित्यनूतन ।
त्वदीय सच्चिदानन्दरूपं नित्य नमो नमः ॥ १२० ॥
एतल्लीलास्तवं नाम स्तोत्रं श्रीकृष्णतारकम् ।
प्रत्यामाष्टोत्तरशते धीया कामपूर्णकम् (?) ॥ १२१ ॥
कीर्तयेन् योऽपि राढमको लभतां कृपया तव ।
कथे मामपि लीलायामाक्षेऽपि परां रतिम् ॥ १२२ ॥

Colophon. इति श्रीकृष्णलीलास्तवं नामस्तोत्रं समाप्तम् ॥ ० ॥ १२२ ॥ ० ॥ ० ॥

विषयस्तु—पुस्तकेऽस्मिन् श्रीकृष्णलीलास्तवं नाम स्तोत्रं वर्णितं ॥

---

**No. 13.** कृष्णलीलार्पणम् । Krisnalīlārpanam Substance, country made white paper, 15 x 5 inches. Folia, 11 Lines, 9-10 in a page Character, Bengali Date, ? Appearance, not fresh Verse Not correct. Incomplete

This codex contains some Sanskrit stanzas with versified Bengali translation on Krisnalīlā Anonymous.

**Beginning.** श्रीश्रीराधाकृष्णाय नमः ।

सुधानां चान्द्रीणामपि मधुरिमोन्माददमनी
दधाना राधादिप्रणयघनसारैः सुरभिताम् ।
समन्तात् सन्तापोद्गमविषमसंसारसरणी-
प्रणीतां ते तृष्णां हरतु हरिलीलाशिखरिणी ॥

अपिच

अनर्पितचरीं चिरात् करुणयावतीर्णः कलौ
समर्पयितुमुन्नतोज्ज्वलरसां स्वभक्तिश्रियम् ।
हरिः पुरटसुन्दरद्युतिकदम्बसंदीपितः
सदा हृदयकन्दरे स्फुरतु वः शचीनन्दनः ॥

**End.** प्रथयन् गुणवृन्दमाधुरीमधिवृन्दावनकुञ्जकन्दरम् ।
सह राधिकया भवान् सदा शुभमभ्यस्यतु केलिविभ्रमम् ॥

किञ्च

अलं कन्दलितादरः श्रुतिपुटीमुद्घाटयन् सेवते
यस्ते गोकुलकेलिनिर्मलसुधासिन्धूत्थबिन्दूनपि
राधामाधविकामधीरमधुरिमस्फाराश्रयस्यार्थयन्
साधीयान् भवदीयपादकमले प्रेमोर्मिरुन्मीलतु ॥

**Colophon.** नास्ति ।

विवरणम्—अत्र बङ्गभाषापद्यानुवादसहितं कृष्णलीलाविषयकं किमपि काव्यं वर्त्तते ।

---

**No. 14.** वृन्दावनविहारिणः कृष्णस्य स्वरूपादिनिरूपणम् । Vrindāvanavihārinah Krisnasya Svarupādinirupanam Substance, foolscap paper 14 x 4 inches. Folia, 3 Lines, 7-8 in a page Character, Bengali Date, ? Appearance, nearly fresh Prose Not correct. Complete

A little treatise dealing with full descriptions of age etc of Krisna and his companions during his stay at Vrindavana Anonymous

**Beginning.** श्रीनन्दनन्दनाय नमः ॥ अथ श्रीकृष्णस्य वयोनिरूपणम् ॥ सार्द्धचतुर्दिनो त्तरपञ्चमासाधिकपञ्चदशवर्षपरिमितम् । १५।८०॥ श्रीललितादायकोऽय।
तस्य लक्षणम्–
विदग्धो नवतारुण्यः परिहासविशारदः ।
निश्चिन्तो धीरललित स्यात् प्राय प्रेयसीवशः ॥
अथास्य वर्णवसने यथा—
श्रीवृन्दावनचन्द्रं नवजलधरसुविनिन्दितभासम् ।
पीतपटं धृतगुञ्जं नौमि सदानन्दितराधकान्त्या ॥
अस्मिन् वयसि नित्यस्थिति ॥

**End** श्रीराधादीना मधुरा रतिः । सा मधुरा रतिस्त्रिविधा । साधारणी, समञ्जसा, समर्था च । क्वचित् विमानचित् कौस्तुभमचित् साधारणी कुब्जाया समञ्जसा श्रीमहिषीणाम् समर्था श्रीव्रजदेवीनाम्। श्रीराधाया भेदो मधुराख्यो भाविक ॥ इति ॥ ॥ व्रजनाथ दीनय दुर्लभम् ॥

**Colophon** नास्ति।

*विवरणम्—श्रीकृष्णस्य वय आदिनिरूपको निबन्धविशेष ।

---

No. 15. कृष्णमङ्गलम् । Krisnamangalam Substance, *country* made yellowish paper, 18 x 5 inches Folia, 229 Lines, 1-9 in a page Character, Bengali Date, ? Appearance, very old worn out Verse Not correct Complete

A voluminous Bengali poem on the character of Krisna, entitled Krisnamangala, by Dvija Madhava

पुस्तकेऽस्मिन् द्विजमाधवविरचितं कृष्णमङ्गलं नाम बङ्गभाषाकाव्यं विद्यते ।

---

**No 16. कृष्णाह्निककौमुदी ।** *Kṛṣṇāhnikakaumudī.* Substance, country made yellow paper, 16 × 6 inches Folia, 60 Lines, 4-21 in a page Character, Bengali Date ? Appearance, nearly old Verse — Not correct Incomplete

A poem on the daily adventures of Kṛṣṇa at Vṛndāvana. Anonymous. The codex contains upto 72 stanzas of the sixth chapter and also explanatory notes on the first chapter only in both the margins

**Beginning.** श्रीश्रीराधाकृष्णौ जयताम् ॥

रजनि चरमयामि श्रीकान्ताभिरामि
किमपि किमपि वृन्दादेवतालाभिनन्द्या ।
विततिरकृतराधाकृष्णयोः स्वापबाधा
ललितमृदुवचनानां शारिकाणां शुकानाम् ॥ १ ॥
प्रथममनुपरीधो बोधयामास राधा
मधुकृदमृतकल्पं शारिकापि सुजल्पैः ॥
अथ कृतमुखवादा कृष्णमुद्भूतमीढ
किमपि युवसमूह प्रेमदक्षोपगूढ ॥ २ ॥
ललितललिताद्यासङ्गती वीतनिद्रा
विधुमुखि किमु शेषे निर्भरं राधिकेवे ।
प्रमदमधुपपुञ्जे सादरं तिष्ठ कुञ्जे
न गणयसि विगर्हां किं गुरूणामनर्हाम् ॥ ३ ॥
चलचितकुलनिशा नालि कुञ्जे प्रविष्टा
परिहर सुरतश्रीस्वापमुद्गच्छ भीमम् ।
समजनि सविशेष पश्य दीपावशेष
कुरु न गतससाध्वी मधुवर्गीय बाधाम् ॥ ४ ॥
ध्रुवमजनि द्विजेन्द्रो ह्रस्वतां देवि सान्द्रो
भवदवचिमधारा त्वत्पदासारकारः ।
इयमपि च चकोरीसत्वरं चञ्चलाक्षी
परिचितिजितरात्रे आत्मनिर्वेदमाप्ते ॥ ५ ॥

**End.** नास्ति ।

**Colophon.** इति कृष्णाह्निककौमुद्यां राधाकृष्णलीलाविनोदे पञ्चमप्रकाशः ॥

विवरणम्—पुस्तकेऽस्मिन् कृष्णाह्निककौमुदीनामकं किमपि कृष्णलीलाविषयकं सुललितं काव्यं विद्यते ।

---

No. 17. क्रमसन्दर्भः । Kramasandarbhah

Although the codex under this number has been labelled with the name of Kramasandarbha only yet it contains two other works besides this, (1) Mathurāmahātmya, (2) Brajavilāsastotra The description of all these are given below by order

(1) क्रमसन्दर्भः । Kramasandarbhah Substance, country made white paper, 11 x 5 inches Folia 102 (the first chapter 64, the second 38) Lines, 11-12 in a page Character, Bengali Date, ? Appearance, nearly fresh Prose and verse Not correct Incomplete

This is a commentary on the Śrimadbhagavata, based chiefly on the commentary of Śridharasvamin, by Jiva Gosvamin Before this work the author wrote under the request of Rūpa and Sanatana six other Sandarbhas or essays on the Vaisnavism so this one is the seventh As in it the subjects mentioned in the Bhāgavata are explained in the same order as in Bhagavata it has been named Kramasandarbha The codex contains upto a part of the second skandha only

**Beginning.** श्रीराधाकृष्णाभ्यां नमः ।

अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया ।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥ १ ॥
श्रीमद्भागवतं नौमि यस्यैकस्य प्रसादतः ।
अज्ञातानपि जानाति सर्व्वं सर्व्वागमानपि ॥ २ ॥
श्रीभागवतसन्दर्भान् श्रीमद्वैष्णवतोषणीम् ।
दृष्ट्वा भागवतव्याख्या लिख्यतेऽत्र यथामति ॥ ३ ॥
यदत्र स्खलितं किञ्चिज्जायतेऽनवधानतः ।
क्षेयं न मम कर्तृत्वा समाहर्तुर्ममैव तत् ॥ ४ ॥
येषां श्रीमाङ्घ्रिनैर्मल्ये प्रसरोऽप्यत्रसाहसे ।
ते दीनानुग्रहस्थया शरणं मम वैष्णवा ॥ ५ ॥

अथ श्रीभागवतश्रीकृष्णाभिन्नावयवस्वरूपदा, श्रीभागवतसन्दर्भनामानं
उद्ग्रथनसमर्थश्रीमद्भागवतटीकादिरूपदृष्टिम इतिमधुरस्य विना
भगवद्भजनभजनाजित मनस्य भगवत्पदकमलभजनविमुख प्रेमपीयूषधारा
प्रवाहबहुल सम्प्रदायप्रवर्त्तकस्य श्रीश्रीकृष्णचैतन्यनाम्नः श्रीभगवतो
कलियुगेऽवतीर्णस्य वैष्णवजनोपास्यस्य तथा सर्वैर्विबुधैर्मान्यैर्भिरेव श्रीभाग
वतसन्दर्भेण कीर्त्ति ।

कृष्णवर्णं त्विषाकृष्णं साङ्गोपाङ्गास्त्रपार्षदम् ।
यज्ञैः सङ्कीर्त्तनप्रायैर्यजन्ति हि सुमेधसः ॥

एकादशस्कन्धस्य कलियुगोपास्यप्रभुं पद्यमिदम् । अस्यार्थविशेषश्चैव
दर्शितो तन्निरीक्षितार्थमाह—

अन्तः कृष्णं बहिर्गौरं दर्शिताङ्गादिवैभवम् ।
कलौ सङ्कीर्त्तनाद्यैः स्म कृष्णचैतन्यमाश्रिताः ॥

+ + + + +

षडेव सूचितानां श्रीकृष्णस्याथ भगवतास्वरूपस्य सम्बन्धाभिधेय
तत्प्रेमलक्षणप्रयोजनानां निर्णयाय पूर्वं तत्त्वसन्दर्भादि षट्सन्दर्भा निरू
पिता । अधुना तु श्रीभागवतक्रमव्याख्यानाय तथापि सम्बन्धाभिधेयप्रयो
जननिर्णयदर्शनाय सप्तम क्रमसन्दर्भोऽयमारभ्यते ॥

श्रीभागवतनिगूढार्थटीकाद्दृष्टिरदायि ये ।
श्रीधरस्वामिपादांस्तान् वन्दे भक्त्यैकरक्षकान् ॥
स्वामिपादैर्न यद्व्यक्तं यद्व्यक्तं चास्फुटं क्वचित् ।
तत्र तत्र च विज्ञेयः सन्दर्भः क्रमसंज्ञकः ॥

**End.** नास्ति ।

**Colophon.** इति प्रथमस्य क्रमसन्दर्भे एकोनविंशोऽध्यायः ॥ ० ॥ १९ ॥ ० ॥ ० ॥ श्रीश्री

विवरणम्—पुस्तकेऽस्मिन् क्रमसन्दर्भो नाम श्रीजीवगोस्वामिविरचित श्रीमद्भागवतटीका विशेषो वर्त्तते । टीकेयं वैष्णवसम्प्रदायेषु भृशं समादृता भवति, सम्मुद्रिता च तैरेवाकरे ।

---

6

*(2)* **मथुरामाहात्म्य ।** Mathurāmahātmyam Substance, country made white paper 11 x 5 inches Folia, 21 Lines, 3-12 in a page Character, Bengali Date, ? Appearance nearly fresh Verse Generally correct Complete

A description of the sacredness of Mathurā, compiled from several Purāṇas. Anonymous.

**Beginning** श्रीश्रीराधाकृष्णाभ्यां नमः । श्रीमथुरायै नमः ।
हरिरपि भजमानेभ्यः प्रायो मुक्तिं ददाति न तु भक्तिम् ।
विहिततदुद्धरणां मथुरे धन्यां नमामि । १ ।
धन्यानामिह दयानन्दास्पदं मंक्ष्यति मुदा ।
माहात्म्यं मथुरापुर्य्याः सर्वतीर्थशिरोमणेः ॥ २ ॥

**End** तीर्थान्यन्यानि भूरीणि पुराणेषु च माथुरे ।
ख्यातान्येवाधुना नैव लिखितानीह कानिचित् । ५०१ ।
अमुना यमुनायुक्ता मथुराया यदूद्वह ।
माहात्म्यार्धपठनाय सुदमापयतां मयि । ५२ ।

**Colophon** इति श्रीमथुरामाहात्म्यं सम्पूर्णम् । ० ॥ ० ॥ श्रीश्रीमथुरायै नमः । ० ॥ ० ॥
श्रीश्रीव्रजमण्डलाय नमः । ० । ० ।

विवरणम्—नानापुराणसंगृहीतो मथुरामाहात्म्यविषयकोऽयं निबन्धः ।

---

(3) व्रजविलासस्तव । Brajavilāsastavah. Substance country made white paper 12×5 inches. Folia 10. Lines 6-12 in a page. Character, Bengali. Date ? Appearance, nearly fresh. Verse. Generally correct. Complete.

*A poem on the praise of Kṛṣṇa's Brajalīlā or adventures while in Brindāvana*, entitled Brajavilāsastava. Anonymous.

**Beginning.** श्रीव्रजनागराय नमः ।
प्रतिहारञ्जुभिर्वृन्दकामाद्यैर्भ्रमराविभिः ।
छित्वा ता सहरनत्ताननधारि पातु मां भटा । १ ।
दग्ध्वा वाईकबन्धबन्धिभिरलं दष्ट दुरात्म्यादिभिः
विद्धं मामतिपारवश्यविशिखैः क्रोधादिभिर्वैरितम् ।
स्वामिन् प्रेमसुधाद्रव करुणया द्राक पायय श्रीहरे
ऽस्मैतानवधीर्य्य सन्ततमहं धीरो भवन् भजे । २ ।
यन्माधुरी दिव्यसुधारसाब्धेः
स्मृते कणं चाप्यतिलोलिताश्च ।

पद्यैर्भस्यानखिल प्रभव
गत्वा स्वनाथौ व्रत तौ दिदृक्षे ॥ २ ॥
प्रादुर्भावसुधाद्रवैश्च नितरामद्रिस्तमाश्रा यथौ
गोष्ठेऽभीष्टमनङ्ग एव परितः क्रीडाविनोदं रसैः ।
प्रीत्योल्लासयतीह मुग्धमिथुनं देवीवतंसाविमौ
गान्धर्वागिरिधारिणौ व्रत कदा द्रक्ष्यामि रागैर्युतौ ॥ ४ ॥
वैकुण्ठादपि सोदराखजनता द्वारावती सा प्रिया
यत्र श्रीशतनिन्दिपत्तनमणिश्रेणीन्द्रैः प्रभु खेलति ।
प्रेमक्षेत्रमसौ ततोऽपि मधुरा श्रेष्ठा हरेर्जन्मतो
यत्र श्रीव्रजएव राजति तरां तामेव नित्यं भजे ॥ ५ ॥

End.

न ब्रह्मा न च नारदो नहि हरो न प्रेमभक्तोत्तमा ।
सम्यग्ज्ञातुमिहाक्षमाऽर्वति तथा यस्योच्चलन्माधुरीम् ।
किन्त्वेको बलदेव एव परितः साद्रै स्वमात्रा स्फुटं
प्रेम्णाप्युद्धव एव वेत्ति नितरां किं स भणोवर्ण्यते ॥ १०४ ॥
अन्यत्र क्षणमात्रमच्युतपुरे प्रेमामृताम्भोनिधि
मातेत्याश्रुत सज्जनैरपि समं गाढ वसामि क्वचित् ।
किन्त्वत्र व्रजवासिनामपि समं येनापि केनाप्यलम्
सत्यापैर्मम निर्भरं प्रतिमुहुर्भासोऽस्तु नित्यं मम ॥ १०५ ॥
रागेण रूपमञ्जर्या रक्तीकृतमुरद्विषः ।
सुधारासितराधायाः पादयुग्मे गतिर्मम ॥ १०६ ॥
इदं नियतमादराद्व्रजविलासनामस्तवं
सदा व्रजजनोल्लसन्मधुरमाधुरीभासुरम् ।
मुहुः कुतुकसंभृता परिपठन्ति ये वल्गु सन्
सुखं परिकरैर्हरेः मिथुनमत्र पश्यन्ति ते ॥ १०७ ॥

Colophon इति श्रीव्रजविलासस्तवः सम्पूर्णः ।

विवरणम्—पुस्तकेऽस्मिन् व्रजमाहात्म्यविषयकाणि पद्यानि वर्त्तन्ते ।

**No 18. कृष्णपूर्व्ववंश्य ।** Kṛṣṇapurvavaṃśyah Substance, country made ash coloured paper, 18 x 6 inches Folia, 7 Lines, 1–10 in a page Character, Bengali Date, ? Appearance, not old Verse Not correct Complete

A little work describing the family companions and neighbours &c. of Śrīkṛṣṇa, in verse Anonymous.

**Beginning.** श्रीगोपीजनवल्लभाय नमः ।

ये विश्रुता परीवारा राधामाधवयोरिह ।
तन्निर्णयाय लोकाय तथा परिकरादय ॥
मथुरामण्डले लोके ग्रन्थेषु विविधेषु च ।
पुराणे चागमाद्ये च तन्त्रेषु च साधुषु ॥
ते समासाल्लिख्यन्ते मनुजस्पृहितुष्टये ।
आनुपूर्व्वीविधानेन नातिप्रथितवर्त्मना ।

तत्र कृष्णस्य परीवारा

कृष्णस्य परीवारास्ते ये जना व्रजवासिन ।
पशुपालास्तथा विप्रा वहिष्ठाश्चेति ते त्रिधा ॥

**End.** रङ्गदेवी

रङ्गदेवी सदीसुद्दसदा रङ्गतरङ्गिणी ।
कृष्णादपि प्रियसखी गन्धर्व्वानुकम्पोत्सुका ।
षाड्गुण्यस्य गुणं तुर्य्यं युक्तिवैचित्र्यमाश्रिता ।
कृष्णस्य कथ्य मन्त्रं तपसा पूर्ण्णमीयुषी ।
विचित्रेष्वाकरादीषु गन्धयुक्तिविधौ च या ।
सख्यो दास्याधिकृता यस्य धूपनकर्म्मणि ॥
सर्व्वोपभक्तयो यस्य सर्व्वथा स्वस्वता गता ।

सुदेवी

सुदेवी केशसंस्कार प्रियसख्यसिताञ्जनम् ।
अङ्गसंवाहनं चास्य कुर्व्वतो पार्श्वगा सदा ॥
शारिकाशुकशिक्षायां नारकुक्कुटयोधने ।
चन्द्रोदयादभुत्पादिवक्त्रिविद्याविधावपि ॥
उद्वर्त्तनविशेषेषु सुष्ठु कौशलमागता ॥
भूर्णा प्रविविधश्चैव नानावेशधरा स्त्रिय ।

याच पवित्रु बन्धेषु श्रीकृष्णविक्रतालया ।
सञ्जाय चन्द्रेण्य नवेवाभ्यचना गता ॥
श्रीभागवतावलीमर्हमिति मेहकया मइर
श्रीवीरच गनी यथा नतिरिदं क्रम स्वयं गोचियाम् ।
श्रीपि मार्थयतेऽवराम्बु टगुहमेनभिया भिक्ति
याहो भावविधा भजाम्बुजइप्रामन्वीजगताम क ॥
चाद्दानमृथ दर्णैरिदं याचि पुन पुन ।
श्रीमद्रूपपदाब्जीजे धूलि स्यां जन्मजन्मनि ॥ ० ॥

Colophon. समाप्तयार्थ पद्य श्रीकृष्णपूर्व्वमकाव्यं ॥

विवरणम्—श्रीराधाकृष्णयो पत्नीवादादिवर्णनमस्ति ।

---

No 19 कृष्णजन्मतिथिविधि । Krisnajanmatithibidhih Substance. country made white paper 12 × 6 inches Folia, 7 Lines 16-18 in a page, Character, Bengali Date ? Appearance, old slightly worm-eaten in parts Verse Not correct Complete

A manual of religious rites and ceremonies to be performed on the birth day of Krisna, entitled Krisnajanmatithividhi Anonymous

*Beginning.* श्रीमद्गोपीनाथाय नम ॥

नत्वा प्रस्टाटवीनाथो प्रभुमा विनिद्रमत ।
लिख्यते शास्त्रतोकाभ्या कृष्णजन्मतिथेर्विधि ॥
अथ पूर्व्वेऽह्नि सन्ध्या सामवेदोदरिन्धिया
कुर्यात् मङ्गलवादित्रगीतपुष्पकमङ्गले ॥
ततपुरोदीधिकाकारं लघिष्ठ चातमाचरेत् ।
रोपयेत् कदलीस्तम्भासत्या कोणचतुष्टये ॥
रङ्गेषाम् सनधार्मूवे सभ्रत परिवष्टयेत् ।
चन्द्रातपं तदुपरि विताध्ये नवचित्रितम् ॥
पताकारोपणं सुह कुर्यात्तु दिकचतुष्टये ।
मङ्गलानि च वस्तूनि स्थापयेत् तत्र सर्व्वत ॥

अथ प्रात सतां वृन्दे कृष्णजन्माष्टमीदिने ।
नृत्यकीर्त्तनवादित्रमङ्गलैः कौतुकोत्करैः ।
दीपमङ्गलकुम्भाद्यैर्वेद्यामुज्ज्वलिताकृती ।
सर्व्वन्यासादिपूर्व्वाङ्गकर्म्मनिर्व्वाहपूर्व्वकम् ॥
कृष्णस्य विजयं कुर्य्यात्स्वधामरसेवितम् ॥

End. ततः स्तुवीत गोविन्दं पौराणैर्वैदिकैरपि ।
सूक्तैर्मन्त्रैरहस्यैश्च स्तवैः स्तोत्रैश्च भक्तिमान् ।
दिवसं गमयन्नेव हरिप्रियजनैः सह ।
स्नानादिपूर्व्वकं कुर्य्याद्विष्णोर्नरङ्गहित ।
निशीथे भगवज्जन्माभिषेकादिमङ्गलम् ।
गीतवाद्यादिभिश्चात्र निदध्याज्जागरोत्सवम् ।
ततः प्रभाते सम्प्राप्य व्रजेन्द्रोत्सवमुत्तमम् ।
भक्त्या महाप्रसादान्नं भुञ्जीत सह वैष्णवैः ।
लोकस्य गोकुलस्यापि व्यवहारप्रदर्शनात् ।
जन्मर्क्षयोगे समवेतयोषिता
चकार सूनोरभिषेचनं सती ।
जन्मर्क्षे चेन्न भवति विप्रेभ्यो देहि गाः सखि ।
गोमूत्रेण स्नापयित्वा पुनर्गोरजसार्भकम् ।
रक्षां च चक्रु शकृता + + द्वाद + + नामभिः ।
गोप्यः सम्पृष्टसलिला अङ्गेषु करयोः पृथक् ।
न्यस्यात्मन्यथ बालस्य बीजन्यासमकुर्व्वत ।
इत्यादि दृष्ट्वा दशमाद्भक्तभावेनसेविनाम् ।
एव जन्मतिथिस्नानविधि कृष्णस्य कीर्त्तित ।
य एवं विधिना कुर्य्यात् तस्य शुभ फलं शृणु ।
गोविन्दस्य प्रियो भूत्वा गाढप्रेमभरान्वित ।
वृन्दावने सुशान्तस्य साक्षात् सेवां समाचरेत् ॥

Colophon. इति श्रीकृष्णजन्मतिथिस्नानविधि सम्पूर्णं ॥ ॥ ० ॥

विवरणम्—श्रीकृष्णजन्मतिथिकृत्यविषयकोऽयं निबन्धः ।

**No 20** कृष्णगणोद्देशदीपिका । *Krisnaganodlesadipika* Substance, country made white paper, 12 × 4 inches Folia, 6 Lines, 6–10 in a page Character Bengali Date, 1472 Śaka. Appearance, very old *Verse* *Not correct* *Complete*

A small treatise enumerating the relation the companions and the servants of *Krisna*, entitled *Krisnaganodde adipika* Anonymous

**Beginning.** श्रीवृन्दावननाथाभ्यां नम ॥

ये सूचिता मता रम्या प्रसिद्धा शास्त्रवीथयी ।
व्याक्रियन्ते परीवारास्ते वृन्दावनचन्द्रयो ॥ १ ॥
मान्या भावाद्ययस्य वयस्या सेवकादय ।
श्रीगोष्ठयुवराजस्य प्रेयस्य पुर क्रमात् ॥ २ ॥
महत्त्वामृतपर्जन्य पर्जन्यो नाम वल्लव ।
वरिष्ठो व्रजगोष्ठोषा स कृष्णस्य पितामह ॥ ३ ॥
वरीयसीति विख्याता महामान्या पितामही ।
मातामही महीनृषाड स्यादस्य सुमुखाभिध ॥ ४ ॥
ख्याता मातामही गोष्ठे पाटला नामधेयत ।
पिता व्रजार्दितानन्दो नन्दोभुवनवन्दित ॥ ५ ॥
माता गोपयशोदात्री यशोदामोदमेदुरा ।
रोहिणी वसुदेवस्य सखपारोहिणी सदा ॥ ६ ॥
उपनन्दाभिनन्दस्य पितृव्यौ पूर्वजौ पितु ।
पितृव्यौ तु कनीयांसौ ख्यातौ सनन्दनन्दनौ ॥ ७ ॥
पितृष्वसृपतिर्नीलो नन्दिनी तु पितृष्वसा ॥
पितृव्यदयिता तुङ्गी पीवरी कुवलातुला ॥ ८ ॥
यशोधरयशोदेवसुदेवाद्यास्तु मातुला ।
मातृष्वसृपतिर्मल्ल स्वसा मातुर्यशस्विनी ॥ ९ ॥
पितामहसमाप्तास्तु कुठेरपुरटादय ।
गोडकगोद्दकावण्डमुख्या मातामहोपमा ॥ १० ॥

**End** नन्दना श्रावता मीता यक्षा (?) भाद्रपदाष्टमी ।
षोडश्या भार्यया रेमे यत्राखिलनिशय विभु ॥ १०५ ॥
इत्यसौ परिवाराणां श्रीवृन्दावननाथयो
असंख्यानां कथञ्चित्तु दिशैव किल दर्शिता ॥ १२६ ॥

तत्कोकिला काननमात्र यत्र
सङ्केतितं कोकिलनाद आसीत् ॥ ५९ ॥
सर्व्वानन्दप्रमूलमतुलं लीलैव तस्या अपि
रूपं तस्य च धाम तत्र परमं माधुर्य्यमात्रं परम् ।
श्रीवृन्दावनमेव दैवतमिह श्रीरीतिचिन्तामणौ
तल्लीलादिविशेषनिरूपणे सर्गस्तृतीयोत्तम ॥ ६० ॥

**Colophon** *of the Text* इति श्रीविश्वनाथचक्रवर्त्तिविरचितश्रीरीतिचिन्तामणौ समाप्त ॥ * ॥ ॥ * ॥ ॥ * ॥

**End** *of the Commentary* यत्र चौरीदधिरस्ति । शैवाल विशिष्टं पद्मानिवैव तथा स स्वयं श्रीकृष्णश्च यत्रास्ति सापि श्रीराधापि तस्य शेवापि च पादसम्वाहन भक्तौ तस्या सती यत्रास्ति कीदृशी सखीनां कृतार्थं तस्या सकामा ॥ ५७ ॥ वृन्दावनेऽस्मिन् श्रीकृष्णस्याखिलव्रजजनमन्दिरेभ्यो लब्धापि सम्पत्प्रदा श्रीमन्ना अपि आस्पदानि कुञ्जकुञ्जमन्दिरादिनानाकौतुकस्थानानि द्वादश मुख्यवनेषु सन्ति । तथा श्रीलक्ष्मीदेव्या हृदि आस्पदानि अपदानि ॥ ५८ ॥ अतो धनिष्ठानि हरेश्चतुर्विंशत्यवतारानि सन्ति । हार्द्दिमदीश्रीप्रभुतास्पदानीति पाठे ईशो महादेवस्तस्य ऐश श्रीकृष्णस्य सुखस्थानानि तत्र तेषूपवनेषु मध्ये कोकिला वननामास्ति यत्र कोकिला वने कृष्णस्य सङ्केतित कोकिल नाद आसीदभूत् । सङ्केतो यथा मयामुकसमये कोकिलवदुच्चैः करिष्यामि तदा त्वया गन्तव्या ॥ ५९ ॥ इह रीतिचिन्तामणौ जयति वा श्रीवृन्दावनमेव तथा तस्या श्रीराधायास्तस्य श्रीकृष्णस्य च लीलैव रूपश्च धाम च दैवते । तत्र लीलारूपधामसु परमं यन्माधुर्य्यमात्र तदेव परं सर्वोत्तमं सर्व्वानन्दस्य मूलं एकमतुलं तत्र तन्मानन्ददायिषु लीला रूपधामसु मध्ये श्रीवृन्दावनस्य दैवतं कीदृशं परमं सर्वोत्तमं माधुर्य्यं मात्र परमप्राकृत । इह रीतिचिन्तामणौ तस्य वृन्दावनस्य य उद्देश विशेष अन्येषां विशेषस्य निरूपणे नेत्रकारणे वा तृतीय सर्गं ॥ ० ॥

**Colophon** *of the Commentary* नास्ति ।

विवरणम्—पुस्तकेऽस्मिन् श्रीविश्वनाथचक्रवर्त्तिप्रणीतरीतिचिन्तामणिनामक श्रीकृष्णलीला विषयक कविप्रबन्ध सटीको वर्त्तते ।

---

**No. 97. रूपचिन्तामणि ।** Rupacintāmaṇiḥ The codex contains leaves of the following different descriptions—(1) Substance, county

made yellowish paper, 9 × 4 inches Folia, 2 Lines, 9–15 in a page. Character, Bengali Date, ? Appearance, old Verse Not correct Complete

(2) Substance, country made white paper, 12 × 4 inches. Folia, 6 (of which first two fol are wanting) Lines 9–11 in a page Character, Bengali Date, ? Appearance, old Prose and verse Not correct. Incomplete, but having explanatory notes in margins

Rūpacintāmani or a complete description of Kṛṣṇa and Rādhā from top to toe in verse Anonymous

**Beginning.** श्रीश्रीकृष्णाय नमः ।

चन्द्रार्द्धं कलशं त्रिकोणधनुषी खं गोष्पदं प्रोष्ठिकां
शङ्खं सव्यपदेऽथ दक्षिणपदे कोणाष्टकं स्वस्तिकम् ।
चक्रं च्छत्रयवाङ्कुशध्वजपवी जम्बूर्द्ध्वरेखाम्बुजं
बिभ्राणं हरिमूनविंशतिमहालक्ष्मार्चिताङ्घ्रिं भजे ॥ १ ॥
छत्रारिध्वजवल्लिपुष्पवलयान् पद्मोर्द्ध्वरेखाङ्कुशौ
अर्द्धेन्दुञ्च वाममनु या शक्तिं गदां स्यन्दनम् ।
वेदीकुण्डलमत्स्यपर्वतवरं धत्तेऽथ सव्ये पदं
तां राधां चिरमूनविंशतिमहालक्ष्म्यार्चिताङ्घ्रिं भजे ॥ २ ॥
कलिन्दात्मजातीरजे मञ्जुकुञ्जा-
वने कुञ्जपुञ्जात मार्गोन्मुखौ ।
सखीकृष्णमालम्बयोगपीठे
स्फुरत्कुञ्जकल्पद्रुमूले सुगम्यौ ॥ ३ ॥

**End.** रमोर्मिकामान् घनबिन्दुबन्धान्
सश्यामबिन्दुं चिबुकं स्मरामः ।
चोलाधरौ सत्युगं मयिव
कर्णौ लसत्कुण्डलचक्रिकाभ्यां ॥ २७ ॥
नासामणौ मौक्तिकमन्वितं हेम
दधं लसत्कुण्डलगण्डवल्लौ ।
भ्रुवौ तथा तिलकदीपर्द
भालं दुरन्तामलमौलिमानम् ॥ २८ ॥
श्रीमणरैषा स्वविनभूषा
नखिदलूनासनिदुग्धविम्बाम् ।

वेणीं विवेशोमिव कालपाशां
विराजद्यामध मन्दहासम् ॥ २८ ॥
श्रीराधिकामाधवपदचिन्ता
मग्नो मनोभिस्मितचोरुगुल्फो ।
श्रावर्षयेद्यो भुवि मानवः पठन् स
माप्नोति तद्दर्शनमाशुशामात् ॥ ० ॥ ० ॥ ० ॥

Colophon. शान्ति ।

विवरणम्—रूपचिन्तामणिनाम श्रीराधाकृष्णपदवर्णनाविषयको निबन्धः ।

---

No. 98. स्वरूपचतुष्टयादिप्रकाशक । Svarupacatuṣṭayādiprakāśakah Substance, country made white paper, 16 x 6 inches Folia, 12. Lines, 12–18 in a page Character, Bengali Date, ? Appearance, old Prose and verse Not correct Incomplete

Although the label put on the codex marks it under a quite different name but after careful perusal the work appears the same as the Kṛṣṇacaritāmṛita which has been already noticed in No 10. Unanimous.

पुस्तकमिदं सम्यग्विभिन्ननामाङ्कितमपि पूर्वालोचितम् श्रीकृष्णचरितामृतेन भिन्नमेनाभिन्नमेव ।

---

No. 99. स्तवामृतलहरी । Stavāmṛitalahari Substance, country made white paper, 16 x 6 inches Folia, 28 Lines, 15-21 in a page Character, Bengali Date, 1600 (1) Appearance, old Prose and verse Not correct Complete

A collection of hymns on defferent subjects under the common name of Stavāmṛ talaharī, each of the hymns having separate name according to its subject and accompanied with commentary in both margins The codex contains the following hymns or stavas — (1) Srigurudevāṣṭakam, (2) Vrindāṣṭakam, (3) Śacinandana Vijayā-

---

(1) This is the date of composition of one of the contents the Suratakathāmṛitākhyam Āryāśataka

ṣṭakam, (4) Suratakathāmṛitākhyam Āryāśatakam, (5) Vṛindāvanāṣṭakam (6) Rūpacintāmaṇih (7) Saṁkalpakalpadrumam, (8) Śrī rādhikādhyānāmṛitam, (9) Svapnavilāsāmṛitam, (10) Jaganmohanamiṣṭadevam, (11) Gītavalī Of these Rūpacintāmaṇi only has been noticed in No 97 Separate descriptions of the rest of the works are given below

(1) **गुरुदेवाष्टकम्** । Gurudevāṣṭakam, eight stanzas on the greatness of Guru by Viśvanātha Cakravartin

**Beginning** *of the Commentary* श्रीराधाकृष्णाभ्यां नमः ।

प्रभुः श्रीकृष्णचैतन्यो जीयात् यत्कृपया भवेत् ।
अपि सिन्धुत्वं मेरुर्मूर्खोऽपि विद्वान् यतोऽणुमान् ॥

अस्मत्कर्तादौ श्रीभागवतस्य श्रीभगवद्गीतायाश्च स्वकृतटीकायां भक्तेरेव साधन साध्यसारभूतत्वं निर्णीय श्रीमद्वृन्दावनचम्पू वर्णितं यत् श्रीकृष्णतत्परिकरलीलाश्रीवृन्दावनौचित्यसत्तादीनां स्वरूपमाधुर्यादिकं तत् सम्यक विवृन्वमपि स्वकृतटीकायां प्रकाश्य श्रीरूपगोस्वामिकृत उज्ज्वलनीलमणि विदग्धमाधवदानकेलिकौमुद्यपरिस्वकृतटीकायां यस्य कर्तुराशयं पूर्वापर सङ्गत्या सम्यक प्रकटय्य ब्रह्मसंहितोपरि स्वकृतटीकायां यथार्थं निर्णीय तत श्रीकृष्णभावनामृताख्यमहाकाव्यं कृत्वा श्रीराधाकृष्णतत्परिकराणां माष्टकालिकलीलापरिपाटीं अधिमाधुर्यास्वादरसमयीं अधिकारियोग्य भक्तेभ्य प्रदर्श्य भक्तमनस्तुरीतिपूरणार्थं माधुर्यकादम्बिनीं कृत्वा माधुर्यप्रदि प्रकारं दर्शयित्वा चमत्कारचन्द्रिकाख्यस्वकृतग्रन्थान्तरे लीलाचमत्कारं तथा प्रेमसम्पुटे प्रेमप्रकारञ्च प्रकटीकृत्य स्वकृतरागवर्त्मचन्द्रिकाख्यग्रन्थे विदग्ध मतवर्त्मगमनप्रदरागानुगाख्यभक्तिमतं संस्थाप्य श्रीमद्वृन्दावनचम्पोलया भक्तिरसामृतसिन्ध्वादरोज्ज्वलनीलमणिलया भागवतामृतस्य च सारसङ्ग्रह मिव तेषां प्रतिमूर्तिरूपमिव सूक्ष्ममिव च सर्वेषामवलोकनेऽसमर्थानां बाल बुद्धीनाञ्च यथातात्पर्यज्ञानार्थं क्रमेण रीतिचिन्तामणिनाम्नी बिन्दाख्य किरणाख्य कणाख्यञ्च ग्रन्थं कृत्वा गानद्वारा श्रीराधाकृष्णयोरूपलीलादि सारसमारु—णं रसकमलभृङ्गीभावार्थञ्च पूर्वक्षणदाख्यं पश्चिमक्षणदाख्यं ग्रन्थद्वयं सङ्कलितं स्वकृतपदैर्विस्तार्य श्रीचिन्मयषट्सन्दर्भस्य श्रीचरणामृतस्य वैदान्तभाष्यं च केनापि कारणेनासमाप्येव अन्यदपि लिखनदाविरता सम्प्रतासाय

पिबन्ति ये भगवत आत्मन सतां
कथामृतं श्रवणपुटेन संभृतम् ।
पुनन्ति ते विषयविदूषिताशयं
व्रजन्ति तच्चरणसरोरुहान्तिकम् ॥

इत्यादिना भगवत् कथाया भागवतकथायाश्च श्रवणप्रभृतिपूर्व्वकभगवच्चरण प्राप्तिफलत्वेन तत्कथ्यतां महाभाग इत्यादिना सतामर्थे सारभृतां निसर्गो इत्यादिना च भक्तानां स्वतश्च भागवतभगवत्कथायां प्रवृत्तिः च चादौ गुर्व्वादौ स्तुत्वा भगवत्स्तुत्यादिना भगवत्कथायां भागवतकथामय स्तवामृताच्छं ग्रन्थं करोति श्रीविश्वनाथचक्रवर्त्तिनामा कविवरोऽस्माकमनुग्रहार्थमिति ।

*Text*

संसारदावानललीढलोकत्राणाय कारुण्यघनाघनत्वम् ।
प्राप्तस्य कल्याणगुणार्णवस्य वन्दे गुरोः श्रीचरणारविन्दम् ॥ १ ॥
महाप्रभोः कीर्त्तननृत्यगीतवादित्रमाद्यन्मनसो रसेन ।
रोमाञ्चकम्पाश्रुतरङ्गभाजो वन्दे गुरोः श्रीचरणारविन्दम् ॥ २ ॥
श्रीविग्रहाराधननित्यनानाशृङ्गारतन्मन्दिरमार्जनादौ ।
युक्तस्य भक्तांश्च नियुञ्जतोऽपि वन्दे गुरोः श्रीचरणारविन्दम् ॥ ३ ॥
चतुर्व्विधश्रीभगवत्प्रसादस्वाद्वन्नतृप्तान् हरिभक्तसङ्घान् ।
कृत्वैव तृप्तिं भजतः सदैव वन्दे गुरोः श्रीचरणारविन्दम् ॥ ४ ॥
श्रीराधिकामाधवयोरपारमाधुर्य्यलीलागुणरूपनाम्नां ।
प्रतिक्षणास्वादनलोलुपस्य वन्दे गुरोः श्रीचरणारविन्दम् ॥ ५ ॥
निकुञ्जयूनो रतिकेलिसिद्ध्यै या यालिभिर्युक्तिरपेक्षणीया ।
तत्रातिदाक्ष्यादतिवल्लभस्य वन्दे गुरोः श्रीचरणारविन्दम् ॥ ६ ॥
साक्षाद्धरित्वेन समस्तशास्त्रैरुक्तस्तथा भाव्यत एव सद्भिः ।
किन्तु प्रभोर्यः प्रिय एव तस्य वन्दे गुरोः श्रीचरणारविन्दम् ॥ ७ ॥
यस्य प्रसादाद्भगवत्प्रसादो यस्याप्रसादान्न गतिः कुतोऽपि ।
ध्यायन् स्तुवंस्तस्य यशस्त्रिसन्ध्यं वन्दे गुरोः श्रीचरणारविन्दम् ॥ ८ ॥
श्रीमद्गुरोरष्टकमेतदुच्चैर्ब्राह्मे मुहूर्त्ते पठति प्रयत्नात् ।
यस्तेन वृन्दावननाथसाक्षात्सेवैव लभ्या जनुषोऽन्त एव ॥ ९ ॥

Colophon *of the Text* इति श्रीगुर्व्वष्टकम् सम्पूर्णम् ।

End *of the Commentary* यस्य गुरोः प्रसादात् भगवत्प्रसादो भवतीत्यत्र प्रमाणं यो मन्त्रः स गुरुः साक्षात् यो गुरुः स हरिः स्मृतः । गुरुर्यस्य भवेत् तुष्टस्तस्य तुष्टो हरिः स्वयमिति । यस्य गुरोरप्रसादात् कुतोऽपि गतिर्न स्यात् ।

तथाहि आदित्यपुराणे अविद्यो वा सविद्यो वा गुरुरेव जनार्दनः । मार्गस्थो वाप्यमार्गस्थो गुरुरेव सदा गतिः ॥ अन्यत्र च हरौ रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन । तस्मात् सर्वप्रयत्नेन गुरुमेव प्रसादयेत् । ब्रह्मवैवर्त्ते अपि ब्रह्म सपत्नी वा विरुद्धा अपि ये क्रुधा । गुरव पूजनीयास्ते इत्यादि साधकस्य गुरौ भक्तिं मन्दीकुर्वन्ति देवता । यस्तोऽस्तीत्य अजेविष्णु मिथो भक्त्या गुरौ कुर्वमिति । श्रीभागवते तु तु बहूनि प्रमाणानि सन्ति । यदि यत्नादि दोषदृष्ट्या गुरौ यदि कदाचिदवज्ञादि स्यात् तस्मात् तथा भगवति स्वस्मिन् वैष्णवादौ भक्तिरादित्यन कुचेष्टादिना अन्यतो वा यदि गुरोरप्रसाद स्यात् तदा न कुतोऽपि गति स्यादिति इतीयेन गुरु प्रसन्न स्यात् तदेव कर्त्तव्यमिति भाव अतस्तस्य गुरोर्यश त्रिसन्ध्य ध्यायं स्तुवन् तस्य चरणारविन्दं वन्दे ॥ ८ ॥ यो जन एतदष्टकं पठति तेन वृन्दावननाथयो साक्षात् सेवा अनुयोऽन्ते एव लभ्या ॥ ९ ॥

(2) वृन्दाष्टकम् । Vṛindāṣṭakam or eight stanzas on the greatness of Vrinda, by the same author with commentary in margin

Beginning *of the Commentary* हे वृन्द ते तव चरणारविन्दं नुम स्तुम । गाङ्गेय स्वर्णस्य तथा चाम्पेयतडितोर्विनिन्दिरुचीनां प्रवाहेण स्नपितमात्मवृन्दं आत्मीयसमूहो यया हे तादृशि बन्धूकवन्धु पुष्पस्यद्युतिरिव द्युतिर्यस्य एवम्भूतोदिव्यवासो यस्या हे तादृशि ।

*Text*

गाङ्गेयचाम्पेयतडिद्विनिन्दिरोचिःप्रवाहस्नपितात्मवृन्दे ।
बन्धूकबन्धुद्युतिदिव्यवासो वृन्दे नुमस्ते चरणारविन्दम् ॥ १ ॥
बिम्बाधरोदित्वरमन्दहास्यनासाग्रमुक्ताद्युतिदीपितास्ये ।
विचित्ररत्नाभरणश्रियाढ्ये वृन्दे नुमस्ते चरणारविन्दम् ॥ २ ॥
समस्तवैकुण्ठशिरोमणौ श्रीकृष्णस्य वृन्दावनधन्यधामनि ।
दत्ताधिकारे वृषभानुपुत्र्या वृन्दे नुमस्ते चरणारविन्दम् ॥ ३ ॥
त्वदाज्ञया पल्लवपुष्पभृङ्गमृगादिभिर्माधवकेलिकुञ्जाः ।
मध्वादिभिर्भान्ति विभूष्यमाणा वृन्दे नुमस्ते चरणारविन्दम् ॥ ४ ॥
त्वदीयदूत्येन निकुञ्जयूनोरत्युत्कयोः केलिविलाससिद्धिः ।
त्वत्सौभगं केन निरुच्यतां तद्वृन्दे नुमस्ते चरणारविन्दम् ॥ ५ ॥
रासाभिलाषो वसतिश्च वृन्दावने त्वदीशाङ्घ्रिसरोजसेवा ।
लभ्या च पुंसां कृपया तवैव वृन्दे नुमस्ते चरणारविन्दम् ॥ ६ ॥

त्वं कीर्त्यसे सात्वततन्त्रविद्भिर्लीलाभिधाना किल कृष्णशक्तिः ।
तवैव मूर्त्तिस्तुलसी नृलोके वृन्दे नुमस्ते चरणारविन्दम् ॥ ७ ॥
भक्त्या विहीना अपराधलक्षैः क्षिप्ताश्च कामादितरङ्गमध्ये ।
कृपामयि त्वां शरणं प्रपन्ना वृन्दे नुमस्ते चरणारविन्दम् । ८ ।
वृन्दाष्टकं यः शृणुयात् पठेद्वा वृन्दावनाधीशपदाब्जभृङ्गः ।
स प्राप्य वृन्दावननित्यवासं तत्प्रेमसेवां लभते कृतार्थः ॥ ९ ॥

Colophon *of the Text.* नास्ति ।

End *of the Commentary* भक्त्या रहिता लक्षापराधैश्च कामादीनां तरङ्गमध्ये क्षिप्ताश्च वयं हे कृपामयि त्वां शरणं प्रपन्नाः ॥ ८ ॥ पदाब्जयोर्भृङ्गः सन् वृन्दावननित्यवासं प्राप्य तत कृतार्थः सन् तयोः प्रेमसेवां लभते ।

Colophon *of the Commentary* इति श्रीवृन्दाष्टकम् ॥ * ॥

(3) शचीनन्दनविजयाष्टकम् । Śacīnandanavijayāṣṭakam, eight stanzas on the victory of Śacīnandana or Caitanya, by the same author.

Beginning *of the Commentary* श्रीकृष्णचैतन्यदेवस्य सर्वैव लीलातिमनोहरा तद्‌ग्रह्यावतारस्य प्रेमास्वादप्रेमदानमेव मुख्यप्रयोजनमतस्तत्सहितस्य तस्य विजयतां वर्णयति गदाधरेति—गदां कृपामयां प्रमाविष्ट श्रीकृष्णचैतन्यदेव आह—पाण्डितो गदाया अथवा स गां येन तेन गदा पर सर्वोत्तम अधर इति पाठेऽप्येष एवार्थः कथम अनिर्वचनीय एको तुल्यो गदाम्बुद इति मधुरमूर्त्तिर्मदा आलोकितमदा स घेनाम्बुदो हुवन् प्रेमोद्रेकेणाम्बुदत्व न प्रमाद अयन नैवद्योधृतनवाम्बुद एतान्धार निजदयाक च सन् शची नन्दनो भुवि लुण्ठन् विजयते विशेषेण जयते सर्वोत्कर्षेण वर्त्तते । विशब्देनाम अन्यावतारेषु प्रेमदानादेरभावात् एवैतीत्कर्ष्यते कृपादयवदस्यापि विजयता बोध्यति ॥ १ ॥

*Text*

गदाधर सदापर स किल बालमोलितो
मयार्चिता गदाम्बना मधुरमूर्त्तिरेकमदा ।
घनाम्बुद इव द्रुवन् प्रलनवाम्बुदो नैवद्य-
धृतम् भुवि निदयवाग्विजयते शचीनन्दन ॥ १ ॥
अलम्बितचरौ हरोद्यदितमावत क्व दय-
महाविनिदुधावघोरगुणकल्पसम्पादिकाम् ।

योऽदर्कं पठति स निर्मलमति निजधामनि दुर्लं स्वयमुरीकुरुत्व श्रीकृष्ण किं कृत्वा प्रणयिरूपवर्गानुगं विधाय। निजप्रणययुक्तो योरूप, रूपगोस्वामी तस्यानुगं विधाय कृत्वा अथवा निजप्रणयिरूपा ये वर्गा निजपार्ष-दर्गाः ॥ ८ ॥

Colophon *of the Commentary* नास्ति।

(4) सुरतकथामृताख्यं आर्य्याशतकम्। Suratakathāmṛtākhyam Āryā-atakam, one hundred Āryās on a discourse between Rādhā and Kṛṣṇa about their mutual affection, by the same author

Beginning *of the Commentary* श्रीराधाकृष्णाभ्यां नमः ॥

श्रीरूपगोस्वामिचरणै सुरतसूचकवाक्यानां सुरतापेक्षयाधिकानन्द जनकत्व स्फुटमुक्तम्। विदग्धमाधवकाव्यादौ विस्तार्थ्य लिखितश्चेत्यत सुरतादपि सुरतकथायाः अधिकानन्दजनकत्वमायातमत सुरतकथास्वादस्य दिग्दर्शनार्थं मेकादिवसीयसुरतकथामार्य्याशतकेन कथयितुमादौ श्रीरूपगोस्वामिनोर्थं प्रार्थनाश्लोक प्रमाणयति कदाहमित्यादि पद्ये मनुवाचाश्नोन्यमित्यथ परस्परकथने सुरतकथाभिन्नत्वासम्भवात सुरतकथाया एव रसबहुलात्व। सुरतकथैव सा कथा यदा श्रीकृष्ण प्राह—हे प्रिये मह्यमधरसुधा निकामं यद्येद्स्वित न वितरसीदं चिव अतिक्रपणोपि अनीषदान्यतमता दाद्यतमता कदाचिद्द धत्ते त्वम्‌नु मदनुभूतातिप्रसिद्धा दाक्षो ॥ १ ॥

Beginning *of the Text.* श्रीराधाकृष्णाभ्यां नमः ॥

कदाहं सेविष्ये व्रततिचमरीचामरमरुद्
विनोदेन क्रीडाकुसुमशयने न्यस्तवपुषौ।
दरीमौलप्रेमो धनमधुरकण्ठिप्रदलको
नुवाचावन्योन्य प्रणयधुवावाविह युवाम् ॥ १ ॥

कृष्ण —

चिरमिदं मेह यदत्तो वितरस्यधरसुधां निकामं मे।
अतिकृपणोपि कदाचिददान्यतमता जगं प्रिये धत्से ॥ १ ॥
स्वयमपि न याति दाने प्रत्युत हृदि रत्नाधिका सभने।
अधरसुधीत्तमविद्या विबुधवराम मे देहि ॥ २ ॥
स्वान्ते विशति भवतीं स्वान्तेवासिस्थितिस्थिवे।
नवि किमु पूर्व्वे भादास्त्वमितामममीषामपि विदुष्यन्ती तव ॥ ३ ॥

राधा

कुसुमरसपीनतिलम्भानिर्मूलनतनकोमलोद्गारे ।
प्रथयसि किमु निजसख्ये ख्यातं पाण्डित्यमसि नैव ॥ ४ ॥
देवाधिपधनुषामपि मयि याञ्चा यत समेव सुहृदर्थ्या ।
स्मरार्त्ते तव हसे वाते रुष्टाभिवैदने तस्मात् ॥ ५ ॥
स्वयमपि परमोत्कर्षे राधा मधुतो तवैव वेदा ।
भुवनपवनमपि चेदं कुसुमायुधपीडनं यदहो ॥ ६ ॥

**End** *of the Text*

प्रविशतु सखे सखेऽयं मुक्तिमधुपं जगमत्र ।
गाने निमील्य गुण्यौ श्रवणपराजी पिधाय यत्नात् ॥ १०१ ॥
काव्यदर्शितैर्नवाभिर्लक्षणमथाने तावद्गलन ।
योगस्तु गमनमिव प्रत्यहमोचितं निदधातु ॥ १०२ ॥
कमलकलितैर्निश्वसिते स्मरभयतो स्वामिनीरवाप्नोत्पम् ।
निद्रालहिमवेष्ट प्रमोदसिद्धा वयं जन मृगताम् ॥ १०३ ॥
राधाकुण्डतटस्थितवाससम्पदां मद कोऽयम् ।
किमु वाञ्छितमतिदुर्लभे वस्तुनि तस्मै समास्तु सभाव्यम् ॥ १०४ ॥
अविरतगुणाकुलिते शाके रूपार्णस्थिते दिवाधीशे ।
सुरतकथ सततमुदगादुदयत भक्तहृदयमसि ॥ १०५ ॥

**Colophon** *of the Text* सुरतकथामृताख्यानाख्यं शतकं सम्पूर्णम् ।

**End** *of the Commentary* ग्रन्थकर्त्ता भावावेशेनाभिलाषं कृत्वा पश्चात्कुण्डे केय देशोदयात् स्वस्य सर्वायोग्यतां मत्वा पुनर्विचारितं केनापि मदनामृत । एतादृश को वा मद येन मम तादृशी वाञ्छा जाता । ततो विचार्य वितर्कयन्नाह— राधाकुण्डतटे स्थिरं स्थितिरेव वासरूप महासम्पदा यथेष्ट मतिशो मद । समते तादृशमदं विना अतिदुर्लभवस्तुनि तयो सेवारूपे मम वाञ्छितं किमु सभाव्यमस्तु नेत्यर्थः । तदाच येन केनापि प्रकारेण यदि राधाकुण्डतटे वास स्यात् तदा एतादृशी वाञ्छा स्वयमधीदितिति भाव ॥ अङ्कस्य वामा गतिरिति देतो खं शून्यं वसु अट पञ्च एक १०८ ॥ एतद्गुणिते १६०० शीकृष्णतनस्थकशाके रूपेति ख्यातमासि सुरतकथाख्यमधतहृद यात् भक्तहृदयाकाशे सुदानन्द भागात् ॥ १०५ ॥

**Colophon.** नास्ति ।

(6) वृन्दावनाष्टकम् । Vṛndāvanāṣṭakam or the eight stanzas on the greatness of Vṛndāvana, by the same author

**Beginning** *of the Commentary* योगसिद्ध्यादिर्मम मास्तु प्रेमापि चेद्यदि न स्यात् मास्तु न भवतु ममतु वृन्दावने तदासनियमेन वासोऽस्तु ॥ १ ॥

**Beginning** *of the Text* नम श्रीवृन्दावनाय ॥

न योगसिद्धिर्न ममास्तु मोक्षो वैकुण्ठलोकेऽपि न पार्षदत्वम् ।
प्रेमापि न स्यादिति चेत्तरां तु ममास्तु वृन्दावन एव वासः ॥ १ ॥
तार्क्ष्यं नहुषं विधिर्यद्यपि सकलभूतानविरदवोऽपि
कोऽप्येव माधुर्यधुरी तदस्मिन् ममास्तु वृन्दावन एव वासः ॥

**End** *of the Text*

सदा रुदन्तो मुखा विहगा रौदन्ति कुजन्ति पिकालिकीरा ।
शिखण्डिनो यत्र नटन्ति तस्मिन् ममास्तु वृन्दावन एव वासः ॥ ८ ॥
वृन्दावनस्याष्टकमेतदुच्चैः पठन्ति ये निश्चलबुद्धयस्ते ।
वृन्दावनेशाङ्घ्रिसरोजसेवां साक्षाल्लभन्ते जनुषोऽन्त एव ॥ ९ ॥

**Colophon** *of the Text* नास्ति ।

**End** *of the Commentary* वृन्दावनमयौ श्रीराधाकृष्णयौ ॥ ९ ॥

**Colophon** *of the Commentary* नास्ति ।

(7) सङ्कल्पकल्पद्रुमम् । Saṁkalpakalpadrumam one hundred and four stanzas on prayer to Rādhā by the same author

**Beginning** *of the Commentary* राधिकाप्रार्थनतत्त्वमारभ्य मस्तकपर्यन्त वर्णयित्वा अधुना तस्या निकटे प्रार्थनां करोति शतश्लोकैः — हे वृन्दावनेश्वरि, हे यौवन रूपादीनां जलधिस्वरूपे त्वं अवधेहि, तव दासीभवानि दासीभूत्वा आत्म सहितां आलिभिः परिवृतां च त्वां सुखयानि इदमेव अहं याचे ॥ १ ॥

**Beginning** *of the Text.* नमो वृन्दावनेश्वर्यै ।

वृन्दावनेश्वरि वयोगुणरूपलीला
सौभाग्यकेलिकरुणाजलधेऽवधेहि ।
दासीभवानि सुखयानि सदा सकान्तां
त्वामालिभिः परिवृतामिदमेव याचे ॥ १ ॥

End *of the Text*

वृन्दावनावनिपते जय सोम सोम
मौले सनन्दनसनातननादिभिरीड्य ।
गोपीश्वर व्रजविलासि युगाङ्घ्रिपद्मे
प्रेम प्रयच्छ निरुपाधि नमो नमस्ते ॥ १०२ ॥
दिव्याश्चा किल वासना भजत रे वृन्दावन तत्र चे
राधाकृष्णविलासवारिधिरसास्वादे न चेद्विन्दथ ।
त्यक्तुं शक्नुत न स्पृहामपि पुनस्तत्रैव तद्वर्त्मनी
विश्वेशा नयते ममैव सतत सङ्कल्पकल्पद्रुमम् ॥ १०३ ॥

Colophon *of the Text* नास्ति ।

End *of the Commentary* रे मम तद्वृत्तय यूयं वृन्दावनं भजत । तत्र वृन्दावने चेद्यदि तं प्रविश्य राधाकृष्णविलासवारिधेः रसास्वादं न विन्दथ तत्र विलासरसास्वादे स्पृहामपि त्यक्तुं न शक्नुत तदा विश्वनाथ' विशिष्टा श्रद्धा यासु ता श्रद्धान्विता वा मम तद्वृत्तय इमं सङ्कल्पकल्पद्रुमं नयत । अस्य पाठादेव सम्यक् रसास्वादोऽन्येषामपि भविष्यतीति । १०४ ॥

Colophon *of the Commentary* नास्ति ।

(8) राधिकाध्यानामृतम् । Rādhikādhyānāmṛitam, *consisting of thirty-two stanzas on meditation of Rādhikā, by the same author*

Beginning *of the Commentary* श्रीवृन्दावनेश्वर्या ध्यानामृतं शाखिना श्लोकेराष तडिदिति स्वकान्त्या करणभूतया तडिताद्विभास कान्त्या प्रहसतिम दग्धवितानस्ता स्वरूपस्य विलास कस्य जगत्य वर्ण्यविवर्णनविषयोऽस्तु न कस्यापीत्यर्थः । सुधा अमृतं ऋषीदृक सुरभ्यादुग्धादि पयासत इति भाव मधवपाऽपरोपि प्राकृतत्वात् पश्चादेवतादिजन्यत्वाच्च श्रीकृ कर्णे क' रोचक एव न तथा इव गुणमाधुर्यादिभि पूर्ण इति भाव । १ ।

Beginning *of the Text* श्रीवृन्दावनेश्वर्यै नमः ।

तडिच्चम्पकस्वर्णकाश्मीरभास
स्वकान्त्या भृशं दग्धविभ्राजिलास ।
स्वरूपस्य तस्यास्तु कस्यास्तु वर्ण्यं
सुधीर्वर्द्धको नाम यत्रोऽपि कर्णे ॥ १ ॥

End *of the Text*

सज्जागर्ति तस्याः परीवारचैत
कटेऽनुचर्य रम्यलीलासमन ।
अथाप्यष्टयामिकामुष्या सपर्या
यथाकालमाचर्य्यते तेन चर्या ॥ १२ ॥

Colophon *of the Text* इति श्रीराधिकाष्टयामामृतम् ॥

End *of the Commentary.* तस्याः राधिकायाः यः परीवारस्तस्य चैतन्यः रम्यलीलासमनमहारासकर्पूरलिप्सीमानित्यवर अनुचर्य जागर्ति परिवारपदेन साधकभक्तोऽपि तदभिमानी तस्य चतसि यदि सदा महारासलीला जागर्ति तदा तेनापि अमुष्या अष्टयामिकी चर्या सपर्या तेन परीवारेण यथाकालमाचर्य्यते क्रियते अनेन ध्यानेन तस्य फलमिदमुक्तम् ॥ १२ ॥

Colophon *of the Commentary* इति श्रीराधिकाष्टयामामृतव्याख्या ॥ • ॥

(9) **स्वप्नविलासामृतम् ।** Svapnavilasamṛtam nine stanzas describing a dream of Krisna about Radha, by the same author

प्रत्यक्षिन् श्रीकृष्णकर्तृक राधिकास्वप्रदर्शनवर्णनम् नवभि श्लोकैर्विलसति ।

(10) **जगन्मोहनमिष्टदेवम् ।** Jaganmohanamiṣṭadevam, a prayer *to Jaganmohana, the God of special worship consisting of nine* stanzas, by the same author.

तत्रापि जगन्मोहनमिष्टदेवस्य सकाशे नव प्रार्थना श्लोका वर्तन्ते ।

(11) **गीतावलि ।** Gitavalih, consisting of songs on Kriṣṇalila, by the same author

Beginning *of the Commentary* श्रीगाविन्देत्यादीनि सम्बोधनपदानि । व्रजजने सह भगंजनकर्तृकैवा गीता लीलाया गाथा कथा यस्य ह तथाभूत कृपया मां प्रेमसुधा पायय । तथा कृपया मां बहुधा बहुप्रकारां निजसेवां कारय । कृपया कारय इत्यादि पदेन प्रेमसुधापान सेवादौ च कृपाकृपां विना स्वस्य सामर्थ्याभावो ध्वनित । मधुरिमो गरिमा गौरवेण सरस करुणालक्ष यशोधनकौशस्य विकास तत् तथा चातिमधुरं सरस कृपाकटाक्ष कृपया मामनुभावय अनुभवं कारय । यदा मधुरिम्णो गरिमा यत्र ह तथाभूत ह सरस हे करुणामय इत्यादि पृथक् पदानि ।

**Beginning** *of the Text* अथ श्रीतास्वी ।

पावन रूपया प्रेमसुधा मां कारय निजसेवां वसुधा मां श्रीगोविन्दमदन गोपालगोपीनाथ । श्रीकृष्ण दर जननमदैवतीलामाया । मधुरिमपरिम सरयकदयान्दवनीवनकीचविकार । मानमुमापद मावय निजगुणदर कलापविकास । श्रीवृन्दावनकलविहारिति राधे हरिदयिते । नव नित्य चरणसरोजलग मानुदरीकृष्ण भणित ॥ १ ॥

**End** *of the Text* मदनमूर्ति कृष गोविन्द इन्दुनिलिदिश मयि निजरसदा मां जीवय मन्दस्मित मुखया । पीतवसन मम कलय मनो नवनीलनलिनकमनीयतनो । वल्लव मदनदर्शन विभो बल्लभ मानुदरीकृष्ण भो ॥ ११ ॥

**Colophon** *of the Text* समाप्तं सदागतलहरी ।

**End** *of the Commentary* पीत वसन यस्य स नवनीलनलिनादपि कमनीया तनुर्यस्य मम मनसापि क्षणमपि कलय प्रेरय । तथा च भगवत्प्रेरण विना भगवद्रूप गुणमाधुर्यादौ मनस प्रवृत्ति न भवतीति च ध्वनित । वल्लवत्वात् सर्वदाकलत्वात् विषयाभिनिवेश एव जायते । मदनगोपस्य मदनजाय वर्तन दर्शिन विरोधभूतवदय । हे विभो सर्वं कर्तुं समर्थं वल्लभ भो प्रिय इति पदद्वयम । स्व यथा प्रियोऽभिप्रेतया मानुदरीकृष्ण श्रीकृष्णचैतन्य । पददर्शनमवमिति ॥ ११ ॥

**Colophon** *of the Commentary* नास्ति ।

---

No 100 पदकल्पतरु । Padakalpataruh Substance, country made white paper, 15 × 6 inches. Folia, 459 Lines, 12 in a page Character, Bengali Date, ? Appearance, nearly fresh Verse. Not correct. Incomplete

An anthology of Padas or Bengali songs of Vaiṣṇava poets collected under the name of Padakalpataru by Vaiṣṇavadāsa. In this work two introductory verses only are in Sanskrit

**Beginning.** श्रीकृष्णचैतन्यचन्द्राय नमः

वन्देऽहं श्रीगुरोः श्रीयुतपदकमलं श्रीगुरून् वैष्णवांश्च

श्रीरूपं साग्रजातं सहगणरघुनाथान्वितं तं सजीवम् ।

नादेन सार्द्धं परिजनसहितं कृष्णचैतन्यदेवम्
श्रीराधाकृष्णपादान् सहचरनिलयान् श्रीनिवासान्वितांश्च ॥
वन्दे श्रीकृष्णचैतन्य कारुण्यातीतविग्रहम् ।
यल्लीलाकारुण्यातीतधामभक्त्यादिभि सह ।

पुस्तकेऽस्मिन् श्रीवैष्णवदाससङ्कलितानि वैष्णवगीतानि वर्त्तन्ते, तत्र पदकल्पतरुनाम्ना प्रसिद्धो ऽयं निबन्धः ।

---

No 101. श्रीमन्नामामृतसमुद्र । Śrīmannamāmṛtasamudrah
Substance, country made white paper, 10 x 4 inches Folia, 8 Lines, 13 in a page Character Bengali Date, ? Appearance, not old Verse. Not correct Complete

A Bengali poem invoking Gauranga and his followers, by Narahari Dāsa

पुस्तकेऽस्मिन् श्रीनरहरिदासकृतानि श्रीगौराङ्गतत्सहचरसम्बोधनपदानि सन्ति बङ्गभाषा लिखितानि पद्यानि सन्ति ।

---

No 102 श्रीराधाकृष्णपूजापद्धतिनिबन्ध । Śrīradhākṛṣṇapujā paddhatinibandhah Substance, white foolscap paper 12 x 4 inches Folia, 7 Lines, 4 8 in a page Character Bengali Date, ? Appearance, nearly fresh Verse and prose Generally correct Complete

A manual of worship of Radha and Kṛṣṇa In the beginning the superiority of Radha over her companions has been established from the authority of several Puranas

Beginning. श्रीश्रीराधाकृष्णाभ्यां नमः । श्रीराधाया प्राधान्यम् ।
पाद्मे कार्त्तिकमाहात्म्ये उत्तरखण्डे तत्कृष्णसङ्गे ।
यथा राधा प्रिया विष्णोस्तस्याः कुण्डं तथा प्रियम् ।
सर्व्वगोपीषु सैवैका विष्णोरत्यन्तवल्लभा ॥ इति
अतएव मात्स्ये शक्तित्वसाधारण्येनाभिन्नतया गणनायामपि तस्या एव वृन्दावने प्राधान्याभिप्रायेणाह ।

वाराणस्यां विशालाक्षी विमला पुरुषोत्तमे।
रुक्मिणी द्वारवत्यान्तु राधा वृन्दावने वने॥ इति

तथाच बृहद्गौतमीये तत्रा एव मन्त्रकथने—

देवी कृष्णमयी प्रोक्ता राधिका परदेवता।
सर्वलक्ष्मीमयी सर्वकान्तिः सम्मोहिनी परा॥ इति

ऋक्परिशिष्टश्रुतावपि

राधया माधवो देवो माधवेनैव राधिका।
विभ्राजन्ते जनेष्विति।

अतएवाह अनयाराधितो नूनमित्यादि। भविष्योत्तरे सूर्यमे—

गोपालिपालिका धन्या विशाखाख्या धनिष्ठिका।
राधानुराधा सोमाभा तारका दशमी तथा॥ इति

विशाखा ध्याननिष्ठिकेति पाठान्तरम्। तथा दशम्यपि तारकानाम्न्येवेत्यथ।
दशमीत्यप्येक नाम वा।

*After* this it enumerates thirty-two bodily signs of a Mahāpurusa, thus—

पञ्च दीर्घं पञ्च सूक्ष्मं सप्त रक्तं षडुन्नतम्।
त्रिह्रस्व पृथु गम्भीरं द्वात्रिंशल्लक्षणामहान्॥
बाहू नेत्रान्तरञ्चैव जानुजङ्घे तथैव च।
स्तनयोरन्तरञ्चैव पञ्च दीर्घं प्रशस्यते॥
सूक्ष्माण्यङ्गुलिपर्वाणि दन्तकेशनखत्वच
पञ्च सूक्ष्माणि यस्यैव न नरा दीर्घजीविन।
पाणिपादतलौ रक्तौ नखान्तरदशानि च।
जिह्वाधरोष्ठतालुश्च सप्त रक्तं प्रशस्यते॥
नासाभिश्च दन्ताश्च ललाटश्च शिरस्तथा।
हृदयञ्चैव विज्ञेयमुन्नतं षट् प्रशस्यते॥
ग्रीवा चैव कटिश्चैव तद्वोदरमेव च।
ह्रस्वानि यौनि वै यस्य ते नरा दीर्घजीविन॥
स्वरोरश्च नाभिश्च त्रिकमेव त्रिधोदित।
भाल वक्ष कटीश्च त्रित्रिभैर्व प्रशस्यते॥

*After* this the Sakhis or *female companions of Rādhā and Krsna* are thus enumerated—

मङ्गलायै ॥ १ ॥ विशाखा ॥ २ ॥ सुचित्रा ॥ ३ ॥ चम्पकलता ॥ ४ ॥
रङ्गदेवी ॥ ५ ॥ सुदेवी ॥ ६ ॥ तुङ्गविद्या ॥ ७ ॥ इन्दुरेखा ॥ ८ ॥
॥ ९ ॥ धन्या ॥ १० ॥ भद्रा ॥ ११ ॥ चन्द्रावली ॥ १२ ॥

End. अथ पूजाविधि ।
अनेनैव क्रमादिदलपद्मान् व्रजपालकान् सम्पूज्य ततोऽष्टदलादिकं व्रजपालेभ्यो नमः । इत्यनेन क्रमविधानेन संपूजयेत् ॥ अथ श्रीकृष्णायुधाः । पाञ्चजन्यशङ्ख ॥ १ ॥ सुदर्शनचक्रम् ॥ २ ॥ कौमोदकी गदा ॥ ३ ॥ पद्म ॥ ४ ॥ शार्ङ्गधनु ॥ ५ ॥ एतान्यायुधानि च सम्पूज्य ततः श्रीकृष्णस्य सर्वायुधेभ्यो नमः ॥ इत्यनेन क्रमविधानेन संपूज्य विसर्जयेदिति । समाप्तम् । आगच्छेति विसर्जनवाक्यं क्षम्योपचारपूर्णमत्रेति चैवम् ।

क्लीँ कृष्णाय गोविन्दाय गोपीजनवल्लभाय स्वाहा । इत्यष्टादशाक्षरमंत्रो दशाक्षरमहामन्त्रराज ॥ ८ ॥ १८ ॥ श्रीँ राधायै नमः ॥ इति षडक्षर मन्त्रराज ॥ क्लीँ कामदेवाय विद्महे पुष्पबाणाय धीमहि तन्नोऽनङ्गः प्रचोदयात् ॥ इति कामगायत्री ॥ श्रीँ गान्धर्विकायै विद्महे कृष्णप्रियायै धीमहि तन्नो राधा प्रचोदयात् । इति राधागायत्री ॥ * ॥ ० ॥ * ॥ ० ॥ गोपीनाथाय विद्महे गोपीवल्लभाय धीमहि तन्नो कृष्ण प्रचोदयात् ॥ इति गोपालगायत्री ॥ * ॥ ० ॥ * ॥ ० ॥ ॐ नमो नारायणाय ॥ इति अष्टाक्षरमन्त्रराज । ॐ नमो भगवते वासुदेवाय ॥ इति द्वादशाक्षरमन्त्रराज ।

Colophon. शान्ति ।

विषयः श्रीकृष्णराधापूजापद्धतिविषयोऽयं निबन्ध ।

---

No. 103. गोविन्दलीलामृतम् । Govindalīlāmṛitam Substance, country made colourless paper, 11 × 4 inches Folia, 223 (of which fol. 1–113 both including and fol 123 134 both including are wanting) Lines, 3-5 in a page Character, Bengali Date, ? Appearance, very old Verse Not correct. *Incomplete*

A poem relating the adventures of Kṛiṣṇa at Vṛindāvana, by Raghunātha Bhatta, complete in twenty-three chapters already described.

विषयस्तूक्तपूर्वम् ।

---

**No. 104.** हरिभक्तिविलासटीका ( दिग्दर्शिनी ) । Haribhaktivilāsaṭīkā (Digdarśinī Substance country made white paper, 10 × 4 inches. Folia, 20 Lines, 7–3 in a page. Character, Bengali Date ? Appearance, nearly fresh Prose Not correct Incomplete

The commentary on the Haribhaktivilāsa, entitled Digdarśinī, already described This Codex contains upto the end of the first chapter only

पुस्तकेऽस्मिन् हरिभक्तिविलासटीकाया दिग्दर्शिन्याः प्रथमविलासमात्रं वर्त्तते ।

---

Under this No we find also a fragment of the text of the Haribhaktivilāsa.

पुस्तकेऽस्मिन् हरिभक्तिविलासस्यापि कतिपयपत्राणि सन्ति ।

---

**No. 105.** उज्ज्वलनीलमणि । *Ujjvalanīlamaṇih Substance, country made white paper, 14 × 4 inches Folia, 105 Lines, 5–7 in a page* Character, Bengali Date, ? Appearance, old Prose and verse. Generally correct. Complete

*Another complete copy of the Ujjvalanīlamaṇih, described before*

विवरणमुक्तपूर्व्वम् ।

---

**No. 106.** मुक्ताचरितम् । Muktācaritam Substance, country made white paper, 15 × 5 inches. Folia, 48 Lines, 3–10 in a page Character, Bengali Date, ? Appearance, very old Prose Not correct. Complete.

A story in prose supposed to be told by Kṛṣṇa under the name of Muktācarita. Anonymous. In order to make the purport of the work clear to the readers we quote below the introductory part of it in extenso.

**Beginning.** श्रीराधागोविन्दौ जयताम् ।

कन्दर्पकोटिरम्याय स्फुरदिन्दीवरत्विषे ।
जगन्मोहनलीलाय नमो गोपेन्द्रसूनवे ॥
कथञ्चित्कथञ्चिल्लाभ्यौ सुखानां मज्जितात्मनो ।
निर्मोजयार्थिनोर्वन्दे राधामाधवयोर्युगम् ॥
निजाङ्गमुक्तखिता भक्तिसुधामर्पयितुं क्षितौ ।
उदितं तं शचीगर्भव्योम्नि पूर्णं विधुं भजे ॥
नामश्रेष्ठं मनुमपि शचीपुत्रमत्र स्वरूपं
रूपं तस्याग्रजमुरुपुरीं माथुरीं गोष्ठवाटीम् ।
राधाकुण्डं गिरिवरमहो राधिकामाधवाशां
प्राप्तो यस्य प्रथितकृपया श्रीगुरुं तं नतोऽस्मि ॥
हरिचरितामृतलहरीं वृन्दाविपिनाम्बुराशिसंभूताम् ।
रसवद्वृन्दारकगणपरमानन्दाय सन्तनुम ॥

एकदा किञ्चिन्मानव्यतपूर्व्वहसालया सत्यभामया कृष्ण साकूतं पृष्ट —

लतासौ मधुरा कस्मिन् जायन्ते धन्यगौव्रति ।
नाथ मत्कङ्कणस्यास्य यासां मुक्ताफलं फलम् ॥

ततस्तद्वृत्तान्तस्मरणात् कृष्ण सानन्दनिर्वेदमिवाह —

गतः स कालो यत्रासीन्मुक्तानां जन्म वल्लीषु
वर्त्तन्ते साम्प्रतं तासां हेतव शुक्तिसंपुटा ॥

ततस्तदपूर्व्वं श्रुत्वा सविशेषश्रवणोत्कण्ठितया भामयेरित कृष्ण पुनराह । एकदा कार्त्तिके मासि गोकुले गोवर्द्धनगिरौ दीपमालिका महोत्सव आसीत् । तत्र सर्व्वो जनो विविधनैपथ्यसामग्रीणां संस्काराय साधनाय च परमासक्तोऽभूत् । गोप्यश्च महाविरतसाधना भवन्तो भूषणार्थं नानालङ्कारसंस्कारसाधनपरा बभूवु । राधा तु मामधरणाख्य सरसीतीरोपान्तमाधवीवनमालिकायां स्वसखीसमुदयेन परमोत्तमसुक्ताभि विविधभूषणानि रचयितुमारेभे । मया च विचक्षणेतियथार्थनामकीर कुमारमुखतस्तच्छ्रुत्वा सकौतुकं तत्र गत्वाऽतिप्रेमास्पदस्य हंसी-हरिणीति नाम्नोर्धेनुयुगलस्य भूषणोत्सवेन तासां सकाशात् प्रार्थितानि + + +

\+ + + + + + +

ततस्ताभिरीषत्स्मित्वाऽन्योन्यमालोकयन्तीनां मध्ये प्रगल्भा ललिता विहस्य शरीरमिव व्याजहार । अये नागर एतानि बहुमूल्यानि मौक्तिकानि

इत्थमादिश्रीजगन्नाथर गोकुलपुरप्रवेशसम्पादयित्रीं परममङ्गलकृतोज्ज्वलित यात्रां विधाय सविनयमिश्रेण श्रीमदग्रजमहानुभावं गोकुलजनमात्रमनुग्-कांक्षितमपि द्वारकापुराभिमानमनर्थमभिमंत्रस्य सार्द्धमुद्धवदारुकाभ्यां श्रीमता नान्दीमुखीपादेन श्रीगोकुलोपकण्ठमासाद्य प्रमदसम्भृतचिराभिलषित निजाभीष्टगृहाभिगमनविधानप्रमाणेन. श्रीमति निजभवनपुरि शुभप्रवेशमङ्गलं करिष्यतीति सुहृद् सम्भ्रमध्वनिना निर्णीतमस्तीति तत् परिवेशितमधुरसमा-चारसुधासारमानन्दासारचुम्बिता श्रवणपथके समाधाय परमसौभाग्यवती सत्यभामा श्रीमुकुन्दं सल्लाप। सखि समञ्जसे एतन्मधुरसरसवार्त्तावय-श्रादरोमोहकाङ्क्षिताह श्रीयादवेन्द्रेण सार्द्धं गोष्ठेन्द्रगोष्ठमवाप्य राधाश्रीकृ-ष्णयोरभेदाभ्यास वाञ्छितुमभिलषामि। समञ्जसा—सखि तथैव सर्वथा भवतु भवत्या इति ॥ ० ॥

आदरादनुरूपं दर्शितं याचे पुनः पुनः ।
श्रीमद्रूपपदाम्भोजधूलिर्भूया भवे भवे ॥ ० ॥
यस्यादाद्रसधया मयोचितधिया मुक्ताचरित्रैर्मया
गुम्फं पुष्पभरैर्व्यधायि य इह श्रीरूपसंजिघ्रया ।
श्रीवाञ्छास मदंकश्रीचिततनीलस्येव द्रुक षट्पदी
प्रायेण परिभुषितं तु ततुतां तत्केलिश्रीभृत्कथी ॥
मुक्ताचरितपुष्पोघैर्गुम्फ गुम्फितमद्भुतं ।
वर्त्तयतु यत्प्रसादात् श्रीमद्रूपनवोदक ॥
यस्य सङ्कल्पतोऽद्भुता मया मौक्तिकोत्सवकथा प्रचारिता ।
तस्य कृष्णकविभूपतेर्व्रजे सङ्गतिर्भवतु मे भवे भवे ॥ ० ॥

**Colophon.** इति मुक्ताचरितं समाप्तम्। यस्य श्रवणमात्रेण पापविशुद्धी भवति यत्र भूतेन दुष्टदुर्गतदुर्ज्जनदुराचारदीनहीनपतिताधमपापिष्ठपामरलब्धधीन केनचित् रसिकदासनाम्ना मजमूर्खतोधिकतरेण प्रेमशून्यनिष्फलप्राण भूतेन लिखितम् ॥ ० ॥ * ॥ ० ॥

विवरणम्—मुक्ताचरितं नाम गोकुले श्रीकृष्णकर्तृकसकलमुक्ताफलविषयकाख्यानविषयोऽयम्

---

No. 107. रसनिरूपणग्रन्थः। *Rasanirūpaṇagranthaḥ* Substance, white foolscap paper, 14 × 5 inches *Folia*, 12 *Lines*, 8 in a page Character, Bengali Date, ? Appearance, *not fresh*, *torn* in parts Prose and verse Not correct *Incomplete*

A w rk treating of Rasas or sentiments and Bhāvas or emotions with their varieties each illustrated with a Sanskrit verse on the adventures of Kṛṣṇa and Radhā as hero and heroin and their companions Anonymous

**Beginning** श्रीश्रीकृष्णचैतन्यचन्द्राय नमः ।

अखिलालम्बना गीता कृष्णस्य च वल्लभा

अथ विषयालम्बनं नायकचूड़ामणि श्रीकृष्ण । यथा—

पदद्युतिविनिर्धूतशरद्राकेन्दुपीडृति

दृंगबलकलानटीपटिमभिर्मनोहारिणी

स्फुरन्नवघनाकृति परमदिव्यलीलानिधि

क्रियात्तु वो जनमयोयुवतिभाग्यसिद्धिर्मुदम् ।

अयं सुरम्यो मधुर सर्वसल्लक्षणान्वित ।

बलीयान्नवतारुण्यो वावदूक प्रियम्वद ।

सुधी सप्रतिभोधीरोविदग्धश्चतुर सुखी ।

कृतज्ञो दक्षिण प्रेमवश्योगम्भीरताम्बुधी ।

वरीयान् कीर्तिमान् नारीमोहनो नित्यनूतन ।

अतुल्यकेलिसौन्दर्यप्रेष्ठवंशीस्वनाङ्कित ।

इत्यादयोऽस्य मधुरे गुणा कृष्णस्य कीर्तिता

उदाहृतिरमीषां तु पूर्वमेव यदीरिता ।

प्रथम गोकुलमदुरादारकास क्रमेण पूर्णतम, पूर्णतर पूर्ण इति त्रिविध

**End** नास्ति ।

**Colophon** नास्ति ।

विवरणम्—रसविषयकग्रन्थविशेष ।

---

**No 108** महाप्रभुरकरचा । Mahāprabhurkaracā Substance, country m de white p p r 12 × 4 inches Foli 10 Lines, 8 13 in a page Character, Bengali Date ? Appearance not fresh Not correct Complete

Bengali songs of special character on Caitanya life and exploits with the na ne of Mahāprabhurkaracā by Vāsu leva Ghoṣa

पुस्तकैरपि महाप्रभुचरणाश्रितानि बाह्मणैरपि विरचितानि चैतन्यचरितविषयकाणि कति बङ्गभाषामयगीतानि सन्ति ।

---

No. 109. संक्षेपभागवतामृतम् । Saṁkṣepabhāgavatāmṛtam

Substance, country made white paper, 15 × 5½ inches Folia, 32 Lines, 8-10 in a page Character, Bengali Date, ? Appearance, nearly fresh Verse and prose Not correct Complete

A sketch of the Bhāgavatāmṛta, a large work by Caitanya relating to Kṛṣṇa and his devotees with allusions from several Purāṇas and Bhaktiśāstras The work is divided into two parts the first is Kṛṣṇāmṛta, and the second Bhaktāmṛta This sketch too has been made according to the original text Anonymous.

Beginning. श्रीकृष्णचैतन्यचन्द्राय नमः ।

नमस्तस्मै भगवते कृष्णायाकुण्ठमेधसे ।
यो धत्ते सर्वभूतानामभवायोशतीः कलाः ॥ १ ॥
हृत्पद्मे स्थित्वा कृष्ण भाष्टीकाद्भिस्तवार्थं ।
यस्ते सङ्गमुपादिकालि द्विजमध्ये ॥ २ ॥
कृष्णाद्विज निम्नकृतमस्य तुष्टिमा ।
स्वमात्मन्द प्रकृत्यर्थं च वस्तुनि काम्यो । ३ ॥
श्रीवत्सचक्रगदा च वर्तमानि च का ।
तमङ्गमा गतपदाप्त विश्रान्ता सर्व ह ॥ ४ ॥
मामकृपयवदा गामये दाताकृतनम् ।
यदाकुनन्द नमव्य निर्दिष्टा ॥ ५ ॥
१. श्रीकृष्णकृतस्य वादेषत तथा ।
यादौ कृष्णदर्त तत महत्तं च तविचार ॥
मिश्रैः पुष्टिविचार सवा व परिम्हता
प्रथमतायाम कमाप्यु सम्प्रत्य समाप्ता ॥ ७ ॥
यतश्च आसायानिवार्य त भावदत्तमात् ।
मन्दस्वर प्रसादेन श्रीकृष्ण परमाद्वैत ॥ ८ ॥
किञ्च तत्त्वनिष्ठानादिलिप्सायदिभाषात ।
यथोभिरव वमन तर्कादाभावरोहत ॥ ९ ॥

षष्ठीपार्श्वेषु मुख्यत्वं वस्तुभूतकथंभूमत ।
कृष्णस्य तत्स्वरूपाणि निगद्यन्ते क्रमादिह ॥ १० ॥
स्वयं रूपस्तदेकात्मरूप आवेशनामका ।
इत्यसौ त्रिविधं भाति प्रपञ्चातीतधामसु ॥ ११ ॥

End. आदिपुराणे च श्रीमदर्जुनवाक्यम्—
केचित्को भगवद्भक्ता, के त्वां जानन्ति सर्व्वेपि ।
वद वा त्वं सदाधार कथं प्रभ तवातुलम् ॥

श्रीभगवद्वाक्यम् ।

न तथा मे प्रियतमो ब्रह्मा रुद्रश्च पार्थिव ।
न च लक्ष्मीर्न चात्मा च यथा गोपीजनो मम ॥
भक्ता मामनुरक्ताश्च कति सन्ति न भूतले ।
किन्तु गोपीजनः प्राणाधिकप्रियतमो मम ॥
न मां जानन्ति मुनयो योगिनश्च परन्तप ।
न च रुद्रादयो देवा यथा गोप्यो विदन्ति माम् ॥
न तपोभिर्न वेदैश्च नाचारैर्न च विद्यया ।
वशोऽस्मि केवलं प्रेम्णा प्रमाणं तत्र गोपिका ॥
मन्माहात्म्यं मत्सपर्य्यां मच्छ्रद्धां मन्मनोगतम् ।
जानन्ति गोपिका पार्थ नान्ये जानन्ति सर्व्वेपि ॥
निजाङ्गमपि या गोप्यो ममेति समुपासते ।
ताभ्यः परं न मे पार्थ निगूढप्रेमभाजनमिति ॥
न चित्रं प्रेममाधुर्य्यभाषा वाञ्छेदयत्युत ।
पादरजूषितं येन तृणजन्मापि याचते ।

तथाहि श्रीदशमे ।

आसामहो चरणरेणुजुषामहं स्यां
वृन्दावने किमपि गुल्मलतौषधीनाम् ।
या दुस्त्यजं स्वजनमार्य्यपथञ्च हित्वा
भेजुर्मुकुन्दपदवीं श्रुतिभिर्विमृग्याम् ॥
इति कृष्ण निर्णयार्थे कृष्णश्रीपादसर्व्वमे ।
देव्या महादेव्याद्यवग्र्यं मतमुत्तम ।
तथापि सर्व्वगोपीनां राधिकातिवरीयसी ।
सर्व्वाधिक्येन कथिता यत् पुराणागमादिषु ॥

यथा पाद्मे—

यथा राधाप्रिया विष्णोस्तस्याः कुण्डं प्रियं तथा।
सर्व्वगोपीषु सैवैका विष्णोरत्यन्तवल्लभा॥

आदिपुराणे च —

त्रैलोक्ये पृथिवी धन्या यत्र वृन्दावनं पुरम्।
तत्रापि गोपिका पार्थ यत्र राधाभिधा मम॥ इति॥ ८॥

Colophon. इति स्तवस्य श्रीभागवतामृत श्रीमतानन्द नाम परखण्ड समाप्तम्॥ * ॥

श्रीमन्मदनगोपाल पदारविन्दमकरन्दम्
पुरन्दरपुरीदृग्राजीवराजिपुत्र नम॥
श्रीगोविन्दं व्रजेन्द्रस्य सुत (सम्पात १) परात्परम्।
सुरेन्द्रसत्यपादाब्ज सुनीन्द्रैरपि संस्तुतम्।
श्रीगोपीनाथनामानं वन्दे माधवं मुदा।
सुधाकरकराकारा यत् कृपा जगतां मुदे। ०॥ ०॥ ०। ०॥
हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे हरे।
हरे राम हरे राम राम राम हरे हरे॥ ०॥ ०॥ ०
श्रीं नमः सच्चिदानन्दरूपाय कृष्णाय परमात्मने।
सर्व्वचिन्त्यस्वरूपाय जगतामीश्वराय च॥

विवरणम्—संक्षिप्तभागवतामृतनामा निबन्धोऽयं श्रीमन्महाप्रभुगौराङ्गकृतभागवतव्याख्यासार रूप।

---

No 110 श्रीमद्वेदस्तवीय संक्षिप्तसुगमसारार्थसङ्कलन। Srîmad vedastavîya samkṣiptasugamasārārthasaṃkalanam Substance country made white and yellow paper 16 × 5 inches Folia, 41 Lines 2–13 in a page Character, Bengali Date ? Appearance not old Prose Generally correct Complete

An easy explanatory note on the Srutistava belonging to the Dasamaskandha of the Bhāgavata with illustrations from several Puranas and Vaisnava works &c Anonymous

Beginning. श्रीकृष्णचैतन्यचन्द्राय नमः। श्रीहरिदासवर्य्यं प्रणम्य।
श्रीश्रीकृष्णपद वन्दे चैतन्यानन्दरूपम्।
गुरु पितागुरुं भक्तिं तत्कृतिसर्व्वस्वम्।

No. 111 चैतन्यचन्द्रामृतम्। Caitanyacandrāmṛtam Substance, country made colourless paper, 18×6 inches Folia, 6 Lines, 11–13 in a page. Character, Bengali Date, Śaka 1719। Bengali era 1204 Appearance, very old, worn out, partly torn and writing effaced in parts. Verse Not correct Complete

A little poem consisting of 141 Sanskrit verses on Caitanya, by Prabodhānanda Sarasvatī The author before his conversion to Vaiṣṇavism was a follower of the non dual theory of Śankarācāryya and his name was Prakāśānanda In the course of a conversation which he had with Chaitanya he was charmed with the excellence of the latter's doctorine and became his disciple under the name of Prabodhānanda Sarasvatī

**Beginning.** श्रीश्रीकृष्णचैतन्यचन्द्राय नमः।

यस्यैव पादाम्बुजभक्तिलभ्य
प्रेमाभिधानः परमः पुमर्थः।
तस्मै जगन्मङ्गलमङ्गलाय
चैतन्यचन्द्राय नमो नमस्ते ॥ १ ॥
यत्राप्तं ब्रह्मनिर्वृत्तैर्न समधिगतं यत्पदं ज्ञानयोगै
र्वैराग्यत्यागतपःस्तुतिभिरपि न यत् तर्कितं चापि कैश्चित्।
गोविन्दप्रेमभाजामपि न च कलितं तद्रहस्यं स्वयं तत्
नाम्नैव प्रादुरासीदवतरति परे यत्र तं नौमि गौरम् ॥ २ ॥
उद्वैराग्याश्रयस्त्वं कचरशमदोद्दण्डपाण्डी
यत्र श्रीकृष्णसङ्गामृतरसस्वतनं पुण्डरीकायताक्षम्।
विश्वस्यामङ्गलघ्नं किमपि हरिहरीशब्दनामस्वनाढ्ये
वन्दे तं देवचूडामणिमतुलरसाविष्टचैतन्यचन्द्रम् ॥ ३ ॥
दृष्टः स्पृष्टः कीर्तितः संस्मृतो वा
दूरस्थैरप्यानतो वादृतो वा।
प्रेम्णः सारं दातुमीशो य एक
श्रीचैतन्यं नौमि देवं दयालुम् ॥ ४ ॥
धर्मास्पृष्टः सततपरमाविष्ट एवात्यधर्मे
दृष्टिं प्राप्तो न च खलु सतां दृष्टिवर्त्मापि नो सन्।
यद्दत्तश्रीहरिरसमुधास्वादमत्तः प्रनृत्य
त्युच्चैर्गायत्यथ विलुठति स्तौमि तं कञ्चिदीशम् ॥ ५ ॥

श्रवणमननसङ्कीर्त्यादिभक्त्या मुरारे
यदि परमपुमर्थं साधयेत् कोपि भद्रम्
मम तु परमपारप्रेमपीयूषसिन्धो
किमपि रसरहस्य धामगौर नमस्यम् ॥ ९ ॥
रक्षो दैत्यकुलं हतं कियदिदं योगादिवर्त्मक्रिया-
मार्गो वा प्रकटीकृतः कियदिदं सृष्ट्यादिकं वा कियत् ।
मेदिन्युद्धरणादिकं कियदिदं प्रेमोज्ज्वलाया महा
भक्तेर्वर्त्मकरीं परं भगवतश्चैतन्यमूर्तिं स्तुम ॥ १० ॥

End. चलद्धारं पद्मदलनयननिस्यन्दिपयसां
प्रवाहैः सम्मुक्ताफलसुललितैर्यस्य वपुषि ।
तदुच्चैर्नामाग्रैरपि च परमा यस्य सुषमा
तमालम्बे गौरं हरिमरुणरोचिष्णुवसनम् ॥ १३८ ॥
सदा रङ्गे नीलाचलशिखरिशृङ्गे विलसतो
हरेरेव भक्त्युन्मुखकमलभृङ्गेक्षणयुगम् ।
महासङ्गप्रेमोन्मदरसतरङ्ग जगदृशा
मनङ्ग गौराङ्ग चरतु गतसङ्ग मम मन ॥ १३९ ॥
जितं जितं मयाद्यापि गौरचन्द्रानुभावत ।
तीर्णा कुमतिकान्तारा पूर्णाः सर्व्वे मनोरथाः ।
ब्रह्मादिमहाश्चर्यमहिमापि महाप्रभु ।
मुग्धबालोदितं श्रुत्वा स्निग्धोऽयं भविष्यति ॥ १४० ॥
दृष्टं न शास्त्रं गुरवो न पृष्टा
विवेचितं नापि बुधैः सहात्र ।
यथा यथा जल्पतु बालभावात्
तथा तथा गौरहरि प्रसीद तु ।

Colophon. इति श्रीप्रबोधानन्दसरस्वतीविरचितं श्रीचैतन्यचन्द्रामृतं सम्पूर्णम् ॥ लिखि
श्रीकृष्णदासस्य शुभमस्तु शकाब्दा १७१९ सनरसत छय हस् शके भाद्र
द्वितीयदिने कुजादिने साकिम कलिकाता चादवन श्रीविजयकृष्ण दासी
लिति सन १२०४ साल ॥ ० ॥ ० ॥

विवरणम्—श्रीप्रबोधानन्दसरस्वतीविरचितश्रीचैतन्यचन्द्रामृतनामकं श्रीचैतन्यस्तुतिविषयकं कश्चित् पद्यनिबन्धः ।

---

